कृष्णदत्तविरचिता

# जानराजचम्पूः

डॉ० जगन्नाथपाठक

अनुसन्धानाधिकारी

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठम्



गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठम्,

इलाहाबाद

KRISHNADATTA'S

# JĀNARĀJACHAMPŪ

CRITICALLY EDITED

BY

DR. JAGANNATH PATHAK

*Research Officer*

G. N. Jha K. S. Vidyapeetha, Allahabad



**Ganganath Jha Kendriya Sanskrit Vidyapeetha**

**Allahabad.**

श्रीजानूनृपतेर्निदेशवशतो वंशावलीवर्णना-
चम्पू गुम्फितुमुद्यतोऽस्मि यदह तत्रावलम्ब शिव. ।
ये स्वाभाव्यपरोपकारकरणप्रौढव्रता साधव-
स्ते सानुग्रहदृष्टयो मयि भवन्त्वित्यत्र काऽभ्यर्थना ॥

(जानराजचम्पूः, ६)

आयान्ती वसुधा पितामहमुखाम्भोजालयात् कौतुकाद्
वाग्देवी सुकुमारसुन्दरपदा श्रान्ति विमुञ्चेत् कथम् ।
स्थित्वा सत्कविराजराजिवदने चन्द्रे विदध्यादिय
लक्ष्मीदेवि न चेद् भवद्गुणगणश्लाघासुधासेवनम् ॥

(लक्ष्मीगुणमणिमाला, १)

जन्मान्धानिव जन्ममूकबधिरश्रोणानिवात्यादरा-
दाशामात्रकृतौपचारिकगुणाभ्यासान्महीशान् मया ।
स्तुत्या यत्परितापिताऽसि वचसामीशे परिश्रामिताऽ-
स्येतस्य प्रतिकर्तुमच्युतकथापीयूषमापाय्यसे ॥

(गीतगोपीपतिकाव्यम्, ४)

# प्रकाशकीयम्

सतत विविधशास्त्रसम्बद्धप्राचीनग्रन्थाना प्रकाशने समुद्योगशालिनोऽस्माद् विद्यापीठादिदानी विशेषेण सहृदयाना काव्यानुशीलनाभ्यासविशदीभूतान्त करणजुषा कृते कविकृष्णदत्तविरचितया जानराजचम्पूनाम्न्या निर्मित्या प्राकाश्यमुपनीय-मानया नितरा मोदपरवश नश्चेत.। मिथिलायामष्टादशशताब्द्यामुत्पन्नस्य तस्य कवेरस्या कृतेरेकमात्रमस्माक विद्यापीठस्य सङ्ग्रहालय एव प्राप्तिस्थानम् ।

एतस्या सम्पादन विद्यापीठस्यैवानुसन्धानाधिकारिणा डॉ० जगन्नाथपाठक-महोदयेन निर्व्यूढमित्यपि वैशिष्ट्यमावहति, यत पाठकवर्या न केवल काव्यशास्त्रज्ञा, पर गीर्वाणवाण्या लब्धप्रतिष्ठा. कवयोऽपि सन्ति । सर्वथा विविधपाण्डुलिपीनामभावे समालोचनात्मक सम्पादन सुमहद् दु शकमित्यनुभवताऽपि तेन पाठालोचनादि जागरूकतया कृतमिति नास्ति वक्तव्यम्—**'विज्ञापितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ।'**

काव्यस्यास्य प्रकाशनाध्यवसायेऽस्मिन् पण्डितवर्यै. प्रो० सरस्वतीप्रसादचतुर्वेद-महाभागै स्वकीय. प्रसाद. सम्यगस्मभ्यं वितरित इति तेभ्य. प्रणतिनिवेदन-मस्माक पवित्र कर्तव्यम् ।

अन्यच्च, काव्यस्यास्य परिशिष्टरूपेण प्रकाश्यमाना कृष्णदत्तस्यैवापरा कृति: **'लक्ष्मीगुणमणिमाला'** सुवर्णे सौगन्ध्यमिव वैशिष्ट्य बिभर्ति । एतत्सम्पादनार्थमपि डॉ० पाठका अस्माक विशेषेण धन्यवादभाजनम् ।

राष्ट्रियसस्कृतसस्थानस्य शासिपरिषदध्यक्षा माननीया. केन्द्रीयोपशिक्षामन्त्रिण: **प्रो० देवनन्दनप्रसादयादवमहाभागा**, सस्थानस्य निदेशका. श्रीमन्त. **प्रभातचन्द्रशर्माण:**,

विद्यावयोवृद्धाः स्थानीयप्रबन्धकसमितेरध्यक्षाः **डॉ० बाबूराम सक्सेनामहाशयाश्च** स्वीयस्वीकृत्यनुग्रहेणास्मान् कृतार्थीकृतवन्त इति तेभ्यः कैः शब्दैर्धन्यवादाः समर्प्यन्तामिति न निश्चेतुं शक्नुमः ।

इलाहाबादल्लाकवर्क्समुद्रणालयेन यथासमयं मुद्रणं सम्पादितमिति तदधिकारिणो धन्यवादमर्हन्ति ।

**डॉ० हरिहर झा**
कार्य० प्राचार्यः

# नामूल नानपेक्षितम्

## (प्रस्तावना)

ख्रिस्तीयाष्टादशशताब्द्या मिथिलायामुत्पन्नेन कृष्णदत्ताख्येन सुकविना जानराज-चम्पूरिय विलिखिता। तस्य खल्वियमेकैव न वर्तते रचना, अपि तु, इत पूर्वं, १९०३ ख्रिस्तीये सवत्सरे 'गीतगोपीपतिकाव्यम्' विद्वन्मूर्द्धन्यैर्मनीषिभि डा० गङ्गानाथ झा-महोदयै सम्पाद्य मुम्बईत प्रकाशितम्, तथा 'पुरञ्जनचरितनाटक' श्रीसदाशिव-लक्ष्मीधरकात्रेमहोदयेन विदर्भसशोधनमण्डलग्रन्थमालाया १९६१ ख्रिस्तीये सवत्सरे सम्पाद्य नागपुरत प्रकाशितम्। प्रकाशनद्वयेनानेन सकलमपि कविविषयक वेदितव्य सम्पादकाभ्यामुभाभ्या सम्प्रस्तुतम्। तदाधारेण, कविनानेन निर्मिताना पाण्डुलिपि-रूपेण सुरक्षितानामन्येषा काव्यानामनुशीलनेन च विदित भवति यत् कविरय मिथिलामण्डलान्तर्गत-'उद्यान' (उजान[१]) ग्रामवास्तव्य सोदरपुरकुलसम्भव-मैथिलश्रोत्रियब्राह्मण[२] आसीदिति। अस्य पितुर्नाम भवेशशर्मा, मातुश्च भगवतीति। अस्याग्रजा षट्शास्त्रपारङ्गतास्त्रयो बभूवु–पुरन्दर, कुलपति, मानिकश्चेति।[३]

---

१. 'उद्यानवास्तव्यसमस्तविद्यश्रीकृष्णदत्तस्य कवित्वमेतत्' (गी गौ. प. १२।२८)। अयमुद्यानग्रामो बिहारराज्यस्य मधुबनीमण्डलान्तर्गत, दरभगातो निर्मलीशाखाया लोहनारोडनाम्न पञ्चमात् धूमशकटावरोधस्थानात् बउहरवाघाटगामिनि मार्गेऽनतिदूरे वर्तते।

२ 'सोदरपुरकुलजातकविकृष्णम्।' तत्रैव ११।२६

३. 'विद्वद्वशवतसित सुचरितस्नातो भवेशाभिधो
ज्येष्ठा यस्य पुरन्दरप्रभृतय षट्शास्त्रपारङ्गता।
लब्धा शैशव एव येन सकला विद्या प्रसाद्याम्बिका
तेनाकारि बुधेन कृष्णकविना श्रीगीतगोपीपति॥' तत्रैव १२।२७

'तामम्बा पतिदेवता भगवती देवी भवेश गुरु
भक्त्यानम्य पुरन्दर कुलपतिं श्रीमालिक चाग्रजान्।
गङ्गाख्या जयदेवदिव्यकविताव्याख्यामिमा मैथिलो
बह्वर्थप्रतिपादनाय तनुते श्रीकृष्णदत्त कविः॥'

(गी. गो. व्याख्या, गङ्गा)

**कवे समयः**

कृष्णदत्तेन स्वकीयरचनासु क्वचित् स्वजन्मकालनिर्देश कृतो न वेति परिशीलयता मया न किञ्चिदुपलब्धम् । तस्य पञ्चत्वप्राप्तिविषयेऽप्यनुमानमेव न शरणम् । श्रीकात्रेमहाशयेन पुरञ्जनचरितनाटकस्य प्रस्तावनाया कवे स्थितिकाल १७७५ ई० सवत्सरो निर्धारित —

'In the light of the likely date of his पुरञ्जनचरित (C 1775 A C ) and cronology of his other works suggested by us above, his literary activities may, with a fair sense of probability, be tentatively assigned to the period 1740-1780 A C ( 30 p )

एतदाधृत्य, तदीयजन्मकालो यथासम्भव खिस्तीयाष्टादशशताब्द्या प्रथमदशक, मृत्युकालश्च १७८० खि० सवत्सरस्य निकटवर्ती कश्चन काल स्यादिति कल्पयितु शक्यते । । श्रीकात्रेमहाशयेन स्वीकृत यत् पुरञ्जनचरितस्य मिथिलाया १९८० खि० संवत्सरे लिखिता पाण्डुलिपयो लेखनानन्तर कविना न सशोधिता इति । गीतगोपीपतिकाव्यस्य व्याख्यानकर्ता डा० गङ्गानाथ झामहाशयाना (१८७१ ई०–१९४१ ई०) श्वशुर श्रीहर्षनाथझामहोदय· कृष्णदत्तस्य, 'स्वमातृमातामहमातुल' इति स्मरति । एतेनापि यथासम्भव कवेर्जन्मकाल खिस्तीयाष्टादशताब्द्या प्रथमदशकमिति निर्धारयितु शक्यते ।

मिथिलाया कविकृष्णदत्तविषये काश्चन किंवदन्त्योऽपि समुल्लसन्ति । तास्वेकस्या सङ्केतो मनीषिवर्यै डॉ० गङ्गानाथझामहोदयैर्गीतगौरीपतिकाव्यस्य भूमिकाया शब्दैरेभि कृत —

" 'बाल्य एव केनापि व्याधिना ग्रस्तो मृतश्चण्डिकाचरणाम्भोरुहषट्पदेन स्वपित्रा स्वग्रामगतचण्डिकायतन नीत्वा रात्रौ प्रतिमाचरणयो समीप स्थापयाञ्चक्रे । प्रभाते तत्र गत्वा प्रत्यागतासु न पित्रादयो गृह निन्यु । तत प्रभृत्येव स बालोऽलौकिकप्रतिभाशाली चमत्कारिकविताशक्तिमाश्चासीदित्यादि किंवदन्त्यद्यापि वरीवर्ति ।"

कुवलयाश्वीयनाटकस्य प्रस्तावनाया कविना स्वकीयो बालभावश्चर्चितस्तथा पुरञ्जनचरितनाटके 'प्रौढ कवि'रित्यात्मानमुल्लिखति । तेन कृतिद्वयस्यास्य रचनाकालोऽनुमातु शक्यते । गीतगौरीपतिकाव्य तेन नागपुरे निवसता लिखितमिति ततः

प्रतीयत एव । पूर्वोद्धृते पद्ये स्वविषये तस्येद वच ‘लब्धा शैशव एव येन सकला विद्या प्रसाद्याम्बिकामि’ति ध्यातव्यम् । कविरय ‘बालकवि’रित्यपि कैश्चिदभिधीयते ।

स शैवाना शाक्ताना वा, (मिथिलायामेतौ सम्प्रदायावद्याप्याधिक्येनोपलभ्यन्ते) कुले गृहीतजन्माऽपि विष्णुभक्त आसीत् । शैववैष्णवयो परस्परमुपजायमानाऽनादरवीस्तद्दृष्ट्या व्यर्थाऽऽसीदिति मत्वैव तेन मधुसूदनसरस्वतीमहोदयाना पन्थानमनुसरता जयदेवसूक्त गीतगोविन्दस्य शैवे पथे योजना कृतेति स्वयमपि स्वीकरोति । यथासम्भवमनेन विविधाना शास्त्राणामध्ययन वाराणस्या कृतम् ।

श्री कात्रेमहोदयैस्तदीयरचनाना समयसीमा १७४० त १७८० ख्रिस्तीयसवत्सर यावन्निर्धारिता ।

नागपुर प्रति तस्याकर्षण जानूजीमहाराजस्य (१७५५–१७७२ ई०) मन्त्रिप्रवराणा प्रखरप्रतिभाशालिना श्रीदेवाजीपन्तचोरघडेमहाशयाना प्रभावेण प्रावर्ततेति पुरञ्जनचरितनाटकस्यामुखतो ज्ञायते । इमे हि चोरघडेमहाशया भोसलेराजकुलस्य महनीयेषु कार्यजातेषु विनिबद्धा आसन्निति तदानीन्तनेनेतिहासेनावगन्तु शक्यते ।

अस्मिन् काव्ये नागपुरीयभोसलावशोद्भवाना नृपतीना वर्णन क्रमेण विहित कविना । ऐतिहासिक्यो घटना अत्र विशेषेण निर्दिष्टा सन्ति । इतिहासदृष्ट्या तासा घटनाना परिशीलने प्रवृत्ताना कृते काव्येनैतेनोपकार स्यादिति मन्ये । श्रीकात्रेमहोदयै पुरञ्जनचरितनाटकस्य भूमिकाया विस्तरेण तासामुल्लेख कृत । तासामत्रोल्लेखो नापेक्षित इति कवे काव्यपक्ष एवास्मिन् प्रसङ्गे किञ्चिदुन्मीलयितु यत्नो विधीयते ।

जानराज प्रति कवे श्रद्धाभावोऽतीव प्रगाढ, स च स्वाभाविक एव । एकत्र तेन निर्दिष्टम्—

क श्रीमान् ? जानराज क इह रणकृतामग्रणी ? जानराज<br>
को धीमान् ? जानराज क उचितरचनाचुञ्चुरो जानराज ।<br>
को दाता जानराज ? प्रवरकविगिरा क स्तुतो जानराज<br>
प्रश्नानामेक एव प्रतिवचनमसौ मानवज्जानराज ॥१७६॥

जानराजस्य 'जानूजी' 'जानुजी' इत्यादि पर्यायान्तरमप्यत्र प्रयुक्तम् । द्वितीयस्या मातृकाया 'जानुराजचम्पू' इति काव्यनामोल्लिखितम् । अस्माभि प्रथममातृका-निर्देशानुसार काव्यमिद 'जानराजचम्पू'रिति प्रकाशितम् । सर्वत्रापि कविना 'जानराजे -ति निर्दिष्टम् ।

काव्येऽस्मिन् वर्णिताना भोसलावशीयाना कतिपयेषा नामानि—

सुधाजी
|
बापोजी
|
बिम्ब
|
रघूजी (१७२९–१७५५ ई०)
|
जानूजी (१७५५–१७७२) मुधाजी (वैमात्रेय)
साबाजी (अनुज) बिम्ब (अनुज)

**रचनाः —**

मैथिलकविनाऽनेन निर्मितेषु ग्रन्थेषु प्रकाशित काव्यद्वयमुपरि निर्दिष्ट-मस्माभि तयोरितेरेषाञ्चात्र परिचयो यथोपलब्धसामग्र्याधारेण सक्षेपतः प्रस्तूयते—

**१ गीतगोविन्दव्याख्या**—जयदेवकवेर्गीतगोविन्दमाधृत्य गङ्गानाम्नी व्याख्या शशिलेखानाम्नी वा । अत्र कृष्णदत्तेन शिवपरतया कृष्णपरतया च व्याख्यान प्रस्तुतम् । शैवा वैष्णवाश्च परस्पर स्वमतगुणप्रख्यापनेन परमतदोषप्रदर्शनेन च द्विषन्ति, तयोरिमा प्रवृत्ति शिथिलयितुकामेन यथा पूर्ववर्तिना (१५६३ खि०) श्रीमधु-सूदनसरस्वतीमहोदयेन शिवमहिम्न स्तोत्रस्य (पुष्पदन्तविरचितस्य) व्याख्यान हरि-हरयोरुभयोरपि पक्षे कृत तद्वदेव समग्रमपि गीतगोविन्दमनेन शिवपरतयाऽपि व्याख्यातम् । स्वय च तेन निर्दिष्टमपि तद्व्याख्यानारम्भे ।

अस्य व्याख्यानस्य पाण्डुलिपिर्गङ्गानाथझाकेन्द्रीयसस्कृतविद्यापीठस्य सग्रहा-लये सुरक्षिता । अन्या च लन्दनस्थ-इण्डियाआफिस-पुस्तकालये वर्तते ।

**आरम्भः—**

प्रीतिं य परमेश्वर. परहित. प्रीतिप्रसन्न परा-
माधत्ता घनसारसुन्दरतरश्रीकस्य सा राधिका ।
गौरीभूषणभूषणीयपदतामन्योन्यशोभार्पणा-
द्धैमीरप्रतिभासिताश्मजटिला प्राप्नोति यस्याङ्कगा ॥१॥

तामम्बा पतिदेवता भगवतीदेवी भवेश गुरु
भक्त्यानम्य पुरन्दर कुलपतिं श्रीमालिक चाग्रजान् ।
गङ्गाख्या'जयदेवदिव्यकविताव्याख्यामिमा मैथिलो
बह्वर्थप्रतिपादनाय तनुते श्रीकृष्णदत्त कवि ॥२॥

घनसमयनिबन्धादाविलत्वेऽपि पुण्य
प्रथयति रसमच्छ भङ्गिभिर्विस्फुरन्ती ।
गमयति पदमेषा वैष्णव शाम्भव वा
जयति जगति गङ्गा गीतगोविन्दटीका ॥३॥

शैव नाद्रियते सुधीरपि मत प्रायोऽधुना वैष्णव.
शैवो नैव च वैष्णव निजनिजासद्वासनावासिन. ।
मत्वेत्थ मधुसूदनोऽपि मुरजित्पक्षे महिम्न. स्तुतिं
व्याचख्यौ जयदेवसूक्तिमपि ता शैवे पथे योजये ॥४॥

**समाप्ति —**

माता पुण्ययशस्वती भगवती देवी भवेश. पिता
सन्तो यस्य पुरन्दरः कुलपति श्रीमालिकश्चाग्रजा ।
तेने मैथिलकृष्णदत्तकविना तेनेह गङ्गाभिधा
टीका या लहरी समाप्तिमगमत् तस्यामिय द्वादशी ।

**पुष्पिका—**

इति भगवतीभवेशसम्भवकृष्णदत्तविरचिताया श्रीगीतगोविन्दव्याख्याया श्रीगङ्गाख्याया द्वादशी लहरी ॥

२. **चण्डिकाचरितचन्द्रिका**–एकादशसर्गात्मक काव्यमिद प०हर्षनाथझा-महोदयस्य सग्रहाद् उपलब्धम् । श्रीकान्त्रेमहोदयानुसार, आर एल. मित्रामहोदयेन (Notices of Sanskrit Manuscripts, Vol VI.) 2003 (P. 30) तथा 2035 (P. 66) सख्ययोरुल्लिखितम् । अत्र मार्कण्डेयपुराणान्तर्गतचण्डीसप्तशत्या-माधृत दुर्गादेव्या गीताधिकरूप यशोवर्णन वर्त्तते । (मत्सुहृदा डॉ किशोरनाथझा-महाशयेन सूचित यदस्य ग्रन्थस्य नवदिल्या कश्चन शोधच्छात्र सम्पादनकर्मणि प्रवृत्त इति) ।

**आरम्भ.—**

सिद्धिश्री साधकाना प्रसरति पुरतो यत्पदाराधकाना
निर्विघ्न यत्प्रसादादुदयति सहसा साऽपि नि श्रेयसश्री ।
त्रैगुण्यात्तत्रिमूर्तिर्निरुपधि करुणाश्चर्यमाधुर्यधुर्या
तुर्या सा काऽपि कुर्यात् सपदि मम मन शुद्धिबुद्धिप्रसिद्धिम् ॥१॥
चन्द्रचूडा चिदानन्दचुञ्चु चन्दनचर्चिताम् ।
चञ्चन्ती चञ्चला चारु चिन्तये चण्डिका चिरम् ॥२॥
सद्‍गुणाम्बुनिधिवृद्धिकारिणी तापपापतिमिरापहारिणी ।
सेव्यताममृतसारगर्भिणी चण्डिकाचरितचन्द्रिका चिरम् ॥३॥
मङ्गलमयि जनमङ्गलनामसहस्रे
प्रथयसि धाम निरुद्धतमिस्रे ।
श्रीमति गतिरसि जगदम्ब जयजय देवि शिवे ॥ध्रुवम् ॥
हरिमवबोधयसि च हरसि च विधिखेदम् ।
जनयसि मधुकैटभमतिभेदम् ॥

**समाप्तिः—**

सिद्धिरस्तु सकले मम साध्ये सम्प्रसादविभवेन शिवाया ।
तत्पदाम्बुजयुगे रमणीये बुद्धिरस्तु सतत सुकृतश्री' ॥

**पुष्पिका—**

इति कृष्णदत्तकृतौ सिद्धिलक्षणाया चण्डीचरितचन्द्रिकाया सम्प्रसादवरप्रदानो नाम एकादश सर्गः । समाप्तोऽय ग्रन्थ ।

### ३. कुवलयाश्वीयनाटकम्—

सप्ताङ्कमिद नाटक आर एल. मित्रमहाशयस्य Notices of Sanskrit Manuscripts ग्रन्थे निर्दिष्टम् । मित्रमहोदयाना निर्देशानुसारमस्मिन्नाटके वैदिकच्छात्रस्य कुवलयाश्वस्य मदालसायाश्च प्रणयवृत्तान्तो वस्तुरूपेण वर्णित. । वृत्तान्तोऽय मार्कण्डेयपुराणान्तर्गत । अस्य खण्डिता पाण्डुलिपिरस्माक विद्यापीठस्य सङ्ग्रहालये वर्तते ।

**आरम्भः—**

भालप्रज्वलनाक्षिकैतवमतीविश्लेषवैश्वानर-
ज्वालावर्तितसौरसैन्धवपय फेनैकलेखेव या ।
सा गौरीमिलने पुन पुररिपो. प्रेमप्रदीपे रस
दातु शक्तिरुपाहितेव कलिता चान्द्री कला पातु व ॥१॥

**सूत्रधार :—**

कृष्णदत्त इति मैथिल कविर्बालभावसुलभत् कुतूहलात् ।
नाटक यदभिनव्यमातनोत् कोऽत्र सम्प्रति गुणागुणग्रह ॥४॥

**समाप्ति —**

तथापीदमस्तु—
काले काले तडित्त्वानमृतरसमयी वृष्टिमिष्टा विधत्ता
पृथ्वी सम्पन्नसस्या भवतु विजयिन पान्तु लोक नरेन्द्रा ।
सर्वं सर्वत्र नन्दत्वखिलगुणगुरौ विन्दतु प्रेमभक्ति
तद्विश्वेशे दयार्द्रे प्रसरतु परित सत्कवे सूक्तिरत्नम् ॥

**पुष्पिका—**

कुवलयाश्वसाम्राज्याभिषेकमहोदयो नाम सप्तमोऽङ्क । समाप्त चेद कुवलयाश्वीय नाटकम् ।

### ४. पुरञ्जनचरितं नाटकम्—

यथा पूर्वं निवेदितमस्माभि पञ्चमाङ्क नाटकमिद श्री स. ल. कात्रे-महोदयै सविधि सम्पाद्य विदर्भसंशोधनमण्डलग्रन्थमालात प्रकाशितम् । नाटकमिद

रूपकात्मक (Allegorical) भागवतपुराणात् (४।२५--२६) गृहीतम्। अस्याभिनयश्च श्रीदेवाजीपन्तस्य सभाया मङ्गलमयमूर्तिश्रीवेंकटेशकेशवसन्निवेशन-द्वारसन्निधाने समजायतेति आमुखतो विदित भवति।

### ५. गीतगोपीपत्तिकाव्यम्---

इदमपि काव्य हर्षनाथझाशर्मनिर्मितेन भावदीपकसमाख्येन व्याख्यानेन समलङ्कृत म.म. डॉ.गङ्गानाथझामहोदयेन सम्पाद्य १९०३ खि. सवत्सरे मुम्बईत प्राकाश्य नीतम्। काव्यमिद जयदेवस्य गीतगोविन्दपद्धत्या लिखितम। अत्र भगवत. श्रीकृष्णस्य भक्तिवशवदेन कविना रचितानि ललितशृङ्गारसमुल्लसितानि गीतानि निर्म्मितानि। स्वकीयस्याश्रयदातुर्जानराजस्य सर्वत्र गीतान्ते नामोल्लेखपुरस्सर क्षेमसम्भावन कृतम्। यदि नाम गीतगोविन्दस्य काव्यमाधुर्यमनेन गीतप्रबन्धेन तुलनयाऽऽलोच्येत, तदा मन्ये कृष्णदत्तस्य कृतेरस्यास्तत्पक्षे ततो न वेदाधिक्य, किन्तु न्यूनत्व कथमपि न स्फुटीभविष्यति। तथापि विनीतेन कृष्णदत्तेनैतदुक्त ग्रन्थारम्भे,

> अश्रान्त जयदेवदिव्यकवितामास्वादयन्ती सिता
> माधुर्यातिशयेन यस्य रसना मन्दायिता च श्रुति।
> भूयस्तत्र रसातिशायनसमुल्लासाय मद्भारती
> तस्यापि क्षणमप्यनुग्रहपद यास्यत्यसावम्लवत्॥२॥

### ६. लक्ष्मीगुणमणिमाला----

इयमपि मातृकारूपेण विद्यापीठीये सङ्ग्रहालये वर्तते। अत्र जानराजस्य पत्न्या लक्ष्मीदेव्या गुणवर्णन वर्तते। सूचीग्रन्थानुसार, का ५०००/३०५ मैथिली लिपि, पत्राणि १--१७ प्राचीना, अपूर्णा[?]। काव्यमिद जानराजस्य धर्मपत्न्या लक्ष्मीदेव्या प्रशस्तिस्वरूप वर्तते। सम्पूर्णमिद जानराजचम्प्वा परिशिष्टरूपेणात्र प्रकाशितम्।

## जानराजचम्पूः

नाम्नैव काव्यमिद गद्यपद्यमयमिति सूचित भवति ('गद्यपद्यमय काव्य चम्पू-रित्यभिधीयत इति' लक्षणात्)। कविना स्वयमेवावास्य काव्यस्य निर्माणकारण-मभिहितम्, यथा--

'श्रीजानूनृपतेर्निदेशवशतो वशावलीवर्णनाचम्पू गुम्फितुमुद्यतोऽस्मि ॥'

स्वकीयस्याश्रयदातुर्वंशादिवर्णनमाश्रिताना प्राचीनाना कवीना विशेषेण कर्त्तव्यमासीत् ।

आदौ मङ्गलाचरणरूपेण महतोमहीयस्या पराम्बायास्त्रिपुरसुन्दर्या राजराजेश्वर्या स्तुति, शिवस्तुति, गणेशस्तुति, वाण्यभ्यर्थना, सज्जनदुर्जनसम्भावना । ततो भोसलाकुलजस्य सुधाजीनाम्नो नृपतेर्वर्णनम् । ततस्तत्पुत्रस्य बापोजिनृपते. प्रशस्ति, ततस्तत्पुत्रस्य बिम्बस्य चर्चा । ततस्तत्पुत्ररूपेणोत्पन्नस्य रघूजीनृपस्य विस्तरेण जन्मादिवर्णनम् । तदीयधर्मपत्न्योश्चर्चा । रघुनृपते. प्रथमस्या पत्न्या जानराजस्य द्वितीयस्याञ्च मुधाजीनाम्नो नृपतेर्जन्म पुनर्द्वयोरपि पत्न्यो पुत्रद्वयस्य प्राप्ति । शरदवर्णनम् । रघूजीनृपतेर्दिग्विजययात्राप्रसङ्ग । सैन्यवर्णनम् । क्रमेण गोदावरीनिकटगमनम् । गोदास्तुति । स्वस्वामिनो रघूजीनृपतेराक्रमणपराभव विशङ्कमानैस्तत्तन्नृपतिसचिवै शरणागमनमन्त्रणाप्रदानम् । देवदुर्गेश्वरेण सह सङ्घर्षस्य स्थिति. । अन्तेऽनन्यगतिकतया तस्य शरणागतिः । ततश्चन्द्रपुरे गोण्डभूपतिविजय । तत्र कालिकाया स्तुति, शिवस्तुतिश्च ।

जानुजीनामान ज्येष्ठ पुत्र पुररक्षार्थं नियुज्य बङ्गराजेन सह रघूजीनृपः योद्धु पूर्वदेशाभिमुख प्रतस्थे । ततो बङ्गेशेन यवनेन सह सङ्ग्राम अन्ते तदीयसन्धिप्रस्ताव । पुनर्नागपुरागमनम् । पुत्रेण जानराजेन स्वागतविधानम् । पुत्रेण सह नगरप्रवेश. । नगरोल्लासवर्णनम् ।

जानराजस्य पितृभारग्रहणम् । ततो रघूजीनृपतेरुत्कर्षेण जातामर्षो दिल्लीश्वरस्य पूर्वामात्य उरङ्गाबादनगरनायक. सहसेन आगत्य स्वमण्डलपर्यटनव्याजेन निवासमकरोत् । पर्यन्ते सोऽपि शुष्कमुखो व्यपासरत् । ततस्तस्य रघूजीनृपतिना सह मैत्री समजनि । एव धर्मं कीर्ति च विस्तार्य रघुराजो दिव जगाम ।

ततो जानुनृपति पृथ्वी शशास । भ्रातृभ्य. शासनव्यवस्था वितीर्य स्वय नागपुरमधितिष्ठता तेन पितृसदृशेन प्रजापालनमारब्धम् । जानराजस्य गुणवर्णनम् । तद्राज्यशासनव्यवस्थावर्णनम् । तत कतिपयान्यैतिहासिकानि घटनानि । तासा विस्तरेण वर्णनम् ।

सत्यप्यैतिहासिकाना दृष्ट्या काव्यस्यास्य महत्त्वे वयमिदानी कवेर्वर्णनानैपुण्यमेव विशिष्याकलनीय मन्यामहे । अस्मिन् काव्ये महाकवेः कालिदासस्य नैषधीयचरितकर्तु. श्रीहर्षस्य, माघस्य च सम्मिलित. प्रभावः सामञ्जस्येन प्रायोऽनुभवगोचरो

भवति । न केवल भावा. कतिपये शब्दा अपि कविना तेषा गृहीता इति एतत्काव्यानुशीलनावसरेऽनुभविष्यन्ति सहृदया. । मध्ये मध्ये अत्यन्त सरला कविना निबद्धा सूक्तय: काव्येऽस्मिन् विराजन्ते ।

प्रौढ्यं श्रीहर्षमनुकुर्वती कवे कृष्णदत्तस्य भाषा काञ्चिदप्यौचिती नाक्रामतीत्यनुभूयते । सर्वत्र प्रवाह इव परिलक्ष्यते । अर्थान्तरन्यासरूपकोपमादीना चमत्कारा काव्यस्यास्य सस्कृतस्येतरेषु चम्पूकाव्येषु विशिष्टस्थान प्रसाधयन्तीत्यत्र नात्युक्ति । 'त्वञ्चापातदृशाऽभिपश्यसि मधु प्रान्ते प्रपात न चे'त्यत्र महाभारतीय (?) वचन 'मधु पश्यसि वै तात प्रपात नैव पश्यसी'त्यादि सफलतया कविनाऽऽत्मासात् कृतम् । एव समग्रस्यापि कृष्णदत्तरचितस्य महनीयस्य साहित्यस्य सामञ्जस्येनाकलनमपेक्षितमिति प्रतिभाति ।

कृष्णदत्तेन काव्यस्य नैकासु विधासु स्वकवित्वस्य चमत्कार प्रदर्शित । गीतकाव्यम्, नाटकद्वयम्, काव्यव्याख्यानैपुण्यमित्यादि कवित्वस्य सहृदयत्वस्य च विलक्षणमस्मिन् सामरस्यमुन्मीलित प्रतिभाति ।

सत्यपि नृपतीना प्रशस्तगानेषु वाण्या दुरुपयोगस्यानुभवदु खवैषम्ये कृष्णदत्तेन जानराज प्रति स्वकीय श्रद्धाभाव. सम्यङ् निवेदित । तथा हि, गीतगोपीपतिकाव्ये—

> ''जन्मान्धानिव जन्ममूकबधिरश्रोणानिवात्यादरा—
> दाशामात्रकृतौपचारिकगुणाख्यासान्महीशान् मया ।
> स्तुत्या यत्परितापिताऽसि वचसामीशे परिश्रामिताऽ—
> स्येतस्य प्रतिकर्तुमच्युतकथापीयूषमापाय्यसे ॥''

इत्यभिदधानेनाऽपि तेन जानराजस्य प्रत्येक गीतेषु नामोल्लेखपुर.सर भविक सम्प्रार्थितम् । समग्रमपि चम्पूकाव्यमिद स्वाश्रयदातरि प्रवृद्धस्य श्रद्धाभरस्य सुतरामुन्मीलन वरीवर्ति ।

मध्ये मध्ये कविना पद्येषु विनियुक्ता. सूक्तय. काव्येऽस्मिन्नुपलभ्यन्ते । ताभिरस्य कवेर्वाग्वैदग्धी समुन्मीलिता भवति । तासु काश्चन—

१ यो यद् वेत्ति स एव तस्य विभवस्तेनैव स श्लाघ्यते ।

२. वीराणा रणविजयावधि प्रकोपः ।

३ भवन्ति भ्रान्ताना स्वपरपरिमोहा विमतयः ।

४. नखच्छेद्ये कुठारस्य प्रयोगो नोचितो यत ।

५. गन्धद्विप किमु सहेत परेभगन्धम् ।

६ साद्धं सम्प्रतिपत्तिरेव हि सता सम्पत्तिमूल मतम् ।

( 'ननु सत्सन्निधिरेव सन्निधि'रितिं नैषधे )

७. महान्तो न च्छलप्रिया ।

८ निजमेव पौरुष किल भवति प्रतिपत्तिकारण महताम् ।

कृष्णदत्तस्य काव्यप्रतिभा वर्ण्यविषयानुकूलशब्दार्थसामग्रीयोजने सर्वत्रैव, जागरूकतराऽभिलक्ष्यते । जानराजचम्प्वा वाग्देवीप्रार्थनया तेन स्वीयकाव्यस्य कलापक्षविषयक स्वरूप कथञ्चिदुन्मलितमपि, तथा हि--- 'येनान्यूनगुणा सुवर्णवलितालङ्कारसम्भाविता नानाश्लेषवती चमत्कृतिपदा सभ्येन सम्भाव्यसे, इति। सस्कृतसाहित्ये नैताद्दशगुणालङ्कारचमत्कारपूर्णकाव्यनिर्माणप्रतिभाशालिना कविवर्याणाभभाव इति विदन्नपि कृष्णदत्त तादृशाना महाकवीना मध्ये सर्वथा नगण्यमात्मान मन्वानोऽपि 'यो यद्वेत्ति स एव तस्य विभवस्तेनैव स श्लाघ्यत' इति धियाऽल्पकेऽपि स्वस्मिन्नादरभाज कतिपये सचेतसो भविष्यन्तीति धिया काव्यनिर्माणे प्रवृत्त ।

यद्यपि चम्प्वामस्या स्वाश्रयदातुर्वशवर्णन कवेर्लक्ष्यभूतम्, तथापि तस्य कवित्वपक्षो नितरामशिथिल एव सर्वत सम्प्रतीयते । स्वाभाविकश्चास्य भाषाप्रवाह क्वचिदलङ्कारादिघटनव्यापारेण न व्याहन्यत इत्यपि समाकलनीयम् । कविश्चाय स्वेच्छया स्वाश्रयदातृयशोवर्णने न प्रवृत्तः, परमेव कर्त्तु प्रवर्तित इत्यत्रापि तदीयपक्षे तत्काव्यनिर्माणस्वातन्त्र्ये च किञ्चिद् बाधक नासीदित्यपि लक्षितव्यम् ।

छन्दोयोजनास्वप्यय कविर्नितरा निपुण । काव्येऽस्मिन् सस्कृतजगति सुप्रसिद्धानि प्राय. समस्तानि छन्दासि, स्रग्धरा-शार्दूलविक्रीडित-मन्दाक्रान्ता-शिखरिणी-मालिनी-वशस्थोपजाति-प्रहर्षिणी-रथोद्धता-पुष्पिताग्राप्रभृतीनि प्रयुक्तानि । ओजस. प्रसादस्य च प्रयोगे माघकवे'र्नैकमोज प्रसादो वा रसभावविद. कवेरि'ति कथन कृष्णदत्ते सर्वथा चरितार्थम् । क्वचित्तु नितान्त सहज प्रवाह समुल्लसति, यथाऽस्मिन् पद्ये—

"ये सम्यङ्मनसि विविच्य साधुबुद्ध्या स्व कार्यं परिणतिशुद्धमारभन्ते ।
तैरेव प्रभवति रत्नभूरिय भूस्तान्येव श्रयति गुणाश्रयोन्मुखी श्री ॥"

चम्पूकाव्यस्यास्य निर्माणोद्देश्य स्वाश्रयदातु स्तुतिमात्रम्। यत्रैवविधा प्रवृत्तयो भवन्ति तत्र स्वाभाविको वाग्व्यवहारो न समुल्लसति, फलत कृत्रिमा अलङ्कारप्रचुरा भाषा कविभि. प्रस्तूयते । अर्थालङ्कारापेक्षया पृथग्यत्ननिर्वर्त्याना हठादाकृष्टाना शब्दालङ्काराणामेव बाहुल्येन प्रयोग उपलभ्यते । कृष्णदत्तो न तावन्नियममिममति-वर्तते । सहृदयानामभ्यन्तरेऽकृत्रिमस्य रससञ्चारस्य प्रवर्तने विफला अप्येतादृशा कृतय सस्कृतसाहित्ये परवर्तिषु युगेषु बाहुल्येन निर्मिता. । चम्पूकाव्येषु येषा विशेषेण साफल्य तेषु विशेषेण रामायणचम्प्वा नलचम्प्वा एव प्राशस्त्य स्वीक्रियते विद्वद्भि । सामान्येन शब्दालङ्कारजन्यचमत्कारप्रणयने सुतरा सफलोऽपि कृष्णदत्त. स्वशब्दयोजनासु किञ्चिद्वैशिष्ट्य बिभर्त्ति ।

कानिचिदलङ्कारप्रयोगोदाहरणान्यत्र निर्दिश्यन्ते । प्रथम शब्दालङ्कारेषु कृष्णदत्तस्य अनुप्रासघटने विशेषाभिनिवेशोऽभिलक्ष्यते, निर्वहत्यपि प्रायस्तमसौ ।

"कृतकविकुलनोदा सद्विनोदा शुभोदा विरचितजनमोदा प्राप गोदा क्रमेण ।"

"लवणिममधुरिमचतुरिममहिताभिर्दोषरतिाभि. ।
सह ताभि सहिताभिर्वनिताभि. कृष्ण इव रेमे ॥"

श्लेषोऽप्यस्य कवेः प्रिय.—

"लावण्यैरविमुक्तमङ्गमखिल शोणप्रभासौ करौ—
हसिश्रीर्मधुरा सितासितमिद चक्षुर्मुख पुष्करम् ।
श्रीरङ्गस्थलमस्य बाहुयुगल वक्षो विशालोदय
चेतोऽस्माकमिहानुरक्तमनिश नाप्नोति मुक्ति कुत ॥"

अत्र श्लेषसमर्थिताया विशेषोक्तेश्चमत्कारो विलक्षण एव ।

उपमा—घनेशलीलासरस. समन्ततो
जग हिरे व्योमतल सितच्छदा. ।
चलज्जलात् क्षीरनिधेर्निरन्तर
हरे शरीर लहरीभरा इव ॥

रूपकम्—केयूराभरणालवालविलसत्सौन्दर्यसारामृत.
प्रोदञ्चतकरपञ्जरो नखरुचीसम्मञ्जरीमञ्जुल. ।
विश्वस्याभयदानकल्पविटपी बाहुर्विभोर्भासते
यच्छायामवलम्ब्य हन्त सुमनसार्था. सुख शेरते ॥

अर्थान्तरन्यास —

दूत प्रस्थापयास बङ्गराज प्रति प्रभुः ।
नखच्छेद्ये कुठारस्य प्रयोगो नोचितो यत ॥

यथाऽस्य पद्यानि तथैव गद्यान्यपि कृत्रिमालङ्कारभारपरिलम्बितानि सन्ति । बाणभट्टस्येवास्य गद्येषु क्वचित् परिसङ्ख्या, क्वचित् श्लेष क्वचिदनुप्रास सम।कलयितु शक्यते । किन्तु गद्यापेक्षया पद्यानामेवात्र प्राचुर्य वर्तते । प्राय सर्वत्रैवायमुपमानत्वेन पौराणिकानि पात्राणि प्रस्तौति । रामादेर्युधिष्ठिरादेश्चोपमानत्वेन नैकधोल्लेख. कृत । स्वभावतो देवताविषयस्तुतिपरककाव्यनिर्माणे सहजप्रवृत्तिशीलेन कविनाऽनेनात्रापि चण्डिकाया गोदानद्या शिवस्य च स्तुती प्राप्तावकाशमुपनिबद्धा । गीतगोपीपति-काव्यस्य मधुरकोमलकान्तपदावलयो जयदेवस्य भणितीना स्मृतिमुत्पादयन्त्येव । तत्रान्येषामपि पद्याना सङ्घटनमपूर्वमेव ।

वस्तुत कवेरस्य सामस्त्येण काव्यप्रतिभाया. समाकलनमस्यामतिसकीर्णाया प्रस्तावनाया दु शकम् ।

दौर्भाग्येन काव्यस्यास्य पाण्डुलिप्योर्द्वयोरेवासमग्रत्वात्, प्रथमस्याश्चान्तिमेषु पृष्ठेषु लिपेरतिसूक्ष्येक्षिकयाऽपि पठितुमशक्यत्वात्, यत्र-यत्र सम्पादनदृष्ट्या प्रश्न-चिह्नामुट्टङ्कनेन पद्यापूर्णताजन्यवैयाकुल्या च सहृदयाना रसास्वादे बाधोपस्थिति· स्यात् ।

**सस्करणस्याधारभूता सामग्री—**

जानराजचम्प्वा अपूर्णं मातृकाद्वय प्रयागस्थगङ्गानाथझाकेन्द्रीयसस्कृतविद्या-पीठस्य सङ्ग्रहालये सुरक्षितम् । एतदतिरिक्त विवरण क्वचिदपि नोपलब्धमस्माभि. । श्रीकात्रेमहोदयेनापि चर्चाऽस्य काव्यस्य न कृतेत्याश्चर्यम् । विद्यापीठस्य प्रकाशित-सूचीग्रन्थानुसारम्—

**क.—का. ३०७/५००२, ३१ × ११.५; पत्राणि १–२४, पङ्क्तयः ११; अक्षराणि ४६, स्थिति प्राचीना, अपूर्णा ।**

**ख.—का ३०८।५००३, ३१ × ११, पत्राणि १-७, पङ्क्तय. १२, अक्षरा-णि ५६, स्थितिः, प्राचीना' अपूर्णा ।**

क. मातृकायाः प्रथमस्मिन् पृष्ठे 'कृष्णदत्तकृतिः जानराजचम्पू' इति, ॐ नमो गणेशाय' इति लिखितम् । तत्रैव मध्ये चक्रबन्ध एको रचित, यस्यारेषु न्यासी-

कृतान्यस्पष्टान्यक्षराणि पठितुमशक्यानि। कथञ्चित् 'मन्दीकृत्य भुजावलेप(म)सतां श्रीराजेन्द्र से (?) क्षोहिणी व्यस्ते सुप्तघ। (ज) ने व्यधात्' इति पठितम्। मातृकाया अन्तिमे पृष्ठे ग्रन्थसमाप्तिसूचना न दत्ता लिपिकारेण। अत्यन्तमस्फुटान्यक्षराणि लिखितानि। अस्या लिपिकार साम्प्रतमेव दिवगतो वर्षीयान् प० ऋद्धिनाथझा-महोदय इति डॉ० किशोरनाथझामहोदयेन सूचितोऽस्मि। अय हि गीतगोपीपतिकाव्यस्य टीकाकर्तुर्हर्षनाथझामहोदयस्य तनय आसीत्।

द्वितीयमातृकाया प्रथमपृष्ठे लिखितम्—

ॐ सरस्वत्यै नम ३। गौरीशङ्कराभ्या नम। अथ जानुराजचम्पू। श्री-ऋद्धिनाथस्येदम्। मन् १३१४ साले इद लिखितम्। गणेश ३। नमो गणेशजननि-दुर्गाराधालक्ष्मीसरस्वती।

द्वयोरप्यनयोर्लेखक एक एवेति प्रतीयते। कतिपयानि पाठान्तराणि यद्यप्युपलभ्यन्ते पर न तानि तथा विचारापेक्षाणि प्रतीयन्ते। प्रथममातृकाया या अशुद्धयस्ता द्वितीयस्या नैव निराक्रियन्ते। पाठालोचनदृष्ट्या यत्र-तत्र मातृकायामेव निर्देशो लिपिकारेण कृत, अस्माभिश्च विचारित।

क्वचित्तु नितान्तमस्फुटतयाऽक्षराणा पठने बाधाऽपि समजायत, क्वचिच्च किञ्चित् खण्डितमपि पत्रप्रान्त पठने काठिन्यमुपास्थापयत्। कतिपयेषु च पत्रेषु लिपिकारेण वाऽन्येन केनचित् सशोधनञ्च कृतम्। बगलिपिसमानजातीयाया मैथिलीलिपेर्नागराक्षरेषु परिवर्तने भ्रमप्रमादा अपि सम्भाव्यन्ते। तत्र हि भतयो, नणलाना बरयोश्च सूक्ष्मध्यानगम्यो भेद। अपि च, सुजन 'स्वजन' इत्यपि पठितु शक्यते।

नागरीलिपिपाठकाना सौविध्यदृष्ट्या 'षण्ड' स्थाने 'खण्ड' इति 'शेषर' स्थाने 'शेखर' इति कृतम्। बहुषु स्थलेषु मैथिलीलिपिकाराणा पद्धतीरनुसरता मया ष-श-साना पूर्वं प्राप्तो विसर्ग: तदनुरूपहलन्तप्रयोगेण परिवर्तित। एव यथा लिखितपाठकवृत्तिरेवात्रास्माभिर्यथासम्भवमधिगता।

सम्पादनक्रमे समग्रस्यापि काव्यस्यार्थानुशीलनमपि मया कर्तु प्रयतितम्। प्रथमपद्यस्य महता विलम्बेन मयाऽर्थोऽधिगत। तत्र प्रथमस्मिश्चरणे 'अपि' शब्दस्य स्वारस्य मया सुबहु चिन्तनानन्तरमपि नावगतम्। एकेन मत्सुहृदा 'राजराजेश्वरी'-तिपदेन पद्यमिद 'विक्टोरिया' देव्या स्तुतिरूपमिति निर्णीतम्।

वस्तुत पद्यमिद कवेः कुलदेवतायास्त्रिपुरसुन्दर्या राजराजेश्वरीपदवाच्याया. स्तुतिरूपमित्यत्र नास्ति सन्देह । यद्येवमन्वय क्रियेत—सततसद्वानन्दविस्फूर्त्तिकीर्त्ते-रानन्दमूर्त्ते शम्भो वपुष्पावनाना प्राणानामपि पुण्यताया प्रणय इव निदानम्, एवम्भूता राजराजेश्वरीति, तदा 'शिव शक्त्या युक्तो यदि भवति शक्त प्रभवितु न चेदेव देवो न खलु कुशल स्पन्दितुमपि' इति सौन्दर्यलहर्यपि सङ्गच्छते ।

राष्ट्रियसस्थानस्याधिकारिभि, प्राधान्येन निदेशकपदमलकुर्वाणै श्रीयुत-प्रभातचन्द्रशर्मवर्यै काव्यस्यास्य प्रकाशनार्थं स्वीकृतिप्रदानेन योऽनुग्रह कृतस्तदर्थं तेभ्यो धन्यवादा वितीर्यन्ते । स्थानीयप्रबन्धकसमितेरध्यक्षैर्मान्यै डॉ० बाबूराम-सक्सेनामहाशयै श्रीमद्भि प्रो० सरस्वतीप्रसादचतुर्वेदमहोदयैश्च स्वानुमति-प्रदानेनाहमनुगृहीत इति तेभ्यो धन्यवादा कै शब्दैर्वितीर्यन्तामिति निश्चेतु न प्रभवाम ।

भूमिकाया श्री स० ल० कात्रे महोदयेन सम्पादितस्य पुरञ्जनचरितनाटकस्य प्रस्तावनातोऽपेक्षितसामग्रीग्रहणमस्माभि कृतमिति तान् प्रत्यधमर्णा वयम् । सुहृदा डॉ० किशोरनाथझाशर्मणा, (अनुसन्धानाधिकारिणा) मैथिलीलिपितो देवनागर्या परिवर्तने, यथासमयञ्च कविविषये ज्ञातव्यसामग्रीसग्रहे ममोपकार कृत, विद्या-पीठस्य सग्रहालये सहायकसग्रहाध्यक्षेण श्रीजीवेश्वरझाशर्मणाऽप्यावश्यकसामग्री यथाकाल प्रस्तुवताऽहमुपकृतोऽस्मि । एतदर्थमुभाभ्यामपि सुहृद्भ्या धन्यवादा समर्प्यन्ते ।

दिल्लीत सद्य समागतेन विद्यापीठस्य कार्यकारिप्राचार्यपदमधितिष्ठता डॉ० हरिहरझामहोदयेन, प्रवाचकेन डॉ० ब्रह्ममित्र-अवस्थीमहोदयेन च यथासमय मुद्रणादिव्यवस्थासौकर्यप्रदानेन मदीय उपकार कृत इति तयोराभारमनुभवाम ।

इलाहाबादब्लाकवर्क्समुद्रणालयस्याधिकारिभि सम्यङ्मुद्रणव्यवस्था कृतेति तेऽपि धन्यवादानर्हन्ति ।

अन्ते, कवेरेव शब्दैरिदमुच्यते—

यदि पुनरिह कोऽपि दूषक. स्यात् अहह भवेत् परिभूषकोऽपि कोऽपि ।
मलिनयति सरोजमन्धकारो दिवसमणिः स्वरुचा स्फुटीकरोति ॥

प्रयाग जगन्नाथ पाठकः

१५ अगस्त,' ७६

# विषयानुक्रमः

# ज्ञानराजचम्पूः

मैथिलकविकृष्णदत्तविरचिता

ॐ नमो गणपतये ।[1]

शम्भोरानन्दमूर्त्तेरपि सततसदानन्दविस्फूर्त्तिकीर्त्ते-
प्राणानां पुण्यतायाः प्रणय इव वपुष्पावनानां निदानम् ।
लीलालावण्यशीलामृतरससरसीचारुकारुण्यपूर्णा
निस्त्रैगुण्याऽपि गुण्या वितरतु भविकं राजराजेश्वरी वः ॥१॥

मल्लीमाल्यभ्रमेणामृतकरकलिकां चारुसिन्दूरबुद्ध्या
ज्वाला[2] लालाटवह्नेर्गलगरलरुचं शङ्कया कज्जलस्य ।
शम्भु कैलासशैलप्रतिफलितवपुर्मण्डलादाददानः
पार्वत्या सम्प्रसाधाविधिमधि सुचिरं मुग्धचित्तोऽवताद् व ॥२॥

कस्तूरीयन्ति देहे नयनसरसिजे कज्जलीयन्ति कर्णे
लीलानीलाम्बुजीयन्त्यपि हरिदुपलीयन्ति हारेऽत्युदारे ।
ग्रैवेयीयन्ति कण्ठे महति कुचतटे कञ्चुकीयन्ति लक्ष्म्या
यासां भासां[3] विलासा मधुमथनतनोस्ता ममान्त स्फुरन्तु ॥३॥

प्राप्त. पातालमूलं मदसलिलझरै. प्लावयन् बाललीला-
मातन्वन्नेव कर्णेजपमधुपसमारम्भसंरम्भशीलः ।
कूर्मे [4]शालूकबुद्ध्या सरसबिसधिया शेषनागे च शुण्डा-
दण्डं व्यापारयिष्यंस्तदुपहितनुतिः पातु वेतण्डतुण्ड ॥४॥

---

१. ख. ॐ नमस्तारायै । २. ख. ज्वाला । ३. ख. भासा । ४ शालूकमुत्पल-कन्द इत्यर्थः ।

वाचां देवि निषेविताऽसि सततं तेनाहमभ्यर्थये
भूया एव तथा मदीयरसनारङ्गे नटन्ती सती ।
येनान्यूनगुणा सुवर्णवलितालङ्कारसम्भाविता
नानाश्लेषवती चमत्कृतपदा सभ्येन सम्भाव्यसे ॥५॥

श्रीजानूनृपतेर्निदेशवशतो वंशावलीवर्णना—
चम्पूं गुम्फितुमुद्यतोऽस्मि यदहं तत्रावलम्बः शिवः ।
ये स्वाभाव्यपरोपकारकरणप्रौढव्रता साधव—
स्ते सानुग्रहदृष्टयो मयि भवन्त्वित्यत्र काऽभ्यर्थना ॥६॥

वाग्देवीकरकीरकायितकविग्रामस्य दिव्या गिरः
श्रुत्वा वाङ्मयमन्दिराङ्गणलुठत्काकायिता मादृशाः ।
निन्द्या एव परं तथापि भविता मय्यल्पकेऽप्यादरो
यो यद् वेत्ति स एव तस्य[1] विभवस्तेनैव स श्लाघ्यते ॥७॥

वाणी ममार्थरहिताऽपि[2] विशृङ्खलाऽपि
श्रीभोसलाकुलवलद्गुणगुम्फितत्वात् ।
कण्ठास्पदीभवितुमर्हति सज्जनाना—
मेणीकिशोरकदृशामिव काचहारः ॥८॥

यदि पुनरिह कोऽपि दूषकः स्या-
दहह भवेत् परिभूषकोऽपि कोऽपि ।
मलिनयति सरोजमन्धकारो
दिवसमणिः स्वरुचा स्फुटीकरोति ॥९॥

---

१ ख नास्ति । २ ख नास्ति ।

सुजनं दुर्जन वाऽहमिह किञ्चन नार्थये ।
तयोर्गुणागुणाख्यानस्वभावो नापगच्छति ॥१०॥

आसीदासीमभूमीवलयवलमानसमस्तप्रशस्तिपात्रभूते अतिमात्रगम्भीरधीरवीरपुरुषरत्नप्रसवतया नीरनिधाविव मर्य्यादाविधाननिधाने श्रीमति भोसलाभिधानेऽन्ववाये चन्द्र इवातन्द्रलोकलोचनानन्दकर कलाकरश्च, पारिजात इव भ्रमरहित समुचितसुमनोमहितश्च, ऐरावत इव दानोद्यतो मानोन्नतश्च, सुरभिरिव पुरभिदवलम्बनीभूतवृषप्रसूतिहेतु सकलमङ्गलसेतुश्च, सुधाधामाभिरामा-[म?]नानारामाकर्षणचणो महामहनीय कामाधिककमनीयः श्रीमान् सुधाजीनामा ॥१॥

विप्रत्राणपरस्य तस्य सुकृतप्राणस्य नारायणे
तारानायकशेखरे च समताबुद्धिस्फुरच्चेतस. ।
कीर्त्तिं कार्तिककृत्तिकापतिकलाकैलासमन्दाकिनी–
कान्ति. कामपि कुर्व्वती कुतुकितामद्यापि विद्योतते ॥११॥

शिवस्यैकभक्तो द्विजत्राणसक्तो गुणे चानुरक्तो जनप्रीतिसक्तः ।
स्फुरद्भोसलावंशपाथोजहसः सुधीरावतसप्रणीतप्रशंस.॥१२॥

दयादानमानावधानावदान-
प्रधानं निधानं सतां धीनिदानम् ।
महीमण्डलख्यातनामा विशिष्टः[1]
सुतस्तस्य बापोजिनामाजनिष्ट ॥१३॥

---

१. ख. वशिष्ट. ।

दारिद्र्याब्धौ वहित्रं सकलवसुमतीचक्रचञ्चच्चरित्र
विद्वन्मित्र पवित्र सुतमभिलषतोऽमित्रसेनालवित्रम् ।
भुक्तिस्वर्गापवर्गार्पणचतुरतरे भक्तिमात्रैकलभ्ये
चेतस्तस्यातिमात्रं शिवपदकमले भृङ्गवद् रक्तमासीत् ॥१४॥

गुणगणमणिमाली भाग्यसौभाग्यशाली
सुजनकमलपालीकान्तिकृद्भानुमाली ।
हृदयनिहितकालीकान्तभक्तिप्रणाली-
निधिरजनि तनूजस्तस्य बिम्बाभिधान ॥१५॥

पित्रो. पुण्यपरम्परापरिणतेः सद्भाग्यसौभाग्यत
शैलाधीशसुतापतेः परमया[1] कारुण्यदृष्ट्या तथा ।
उच्चस्थायिचतुर्ग्रहे सुसमये सर्व्वग्रहालोकिते
लग्ने तस्य महात्मनोऽजनि सुतो विश्वम्भरांशो यथा ॥१६॥

तत्र सुगृहीतनामधेये महाभागधेये दुर्ज्जननिग्रहाय सज्जनानुग्रहाय धर्मसङ्ग्रहाय चाभ्युद्यते नारायण इवावर्जितसुदर्शने, न केवलं मातापितरौ भोसलाकुलमपि यदुकुलमिव[2] निराकुलममन्दमानन्दसन्दोहमविन्दत ॥२॥

दैवज्ञैरतिमुदितैरवादि विज्ञै-
रुत्पत्ति· सकलमन प्रहर्षिणीयम्[3] ।
एतस्याभवदतुलस्य राजयोगे
येनासावखिलदिशोऽपि जेष्यतीति ॥१७॥

तत प्रमुदितेनास्य तातेन हितसन्निहितपुरोहितसहितेन जात-

---

१ क. परमय । २. ख. नास्ति । ३. ख. प्रहर्षणीयम् ।

कर्म सम्पाद्य समुचिते महितेऽहनि रघुरिव सकलदिशो लघु विजेष्यत इति निश्चित्य लौकिकरीत्या रघूजीति नाम चक्रे ॥३॥

अवर्द्धत दिने दिने स सकला. कला सन्दधत्
क्रमादमृतभानुवद् दलितकैरवाभ्यन्तर ।
विलोचनचकोरकं शिशिरयन् सतां सोदयो
मनोरथशतै समं निजकुलस्य पृथ्वीमधि ॥१८॥

वयोविद्यावृद्धै सह सततवासेन सुमते–
रमुष्याभूद्[१] बाल्यापगमसमये नीत्यधिगम ।
अथासौ कौमारे गजहयरथारोहणकला
धनु कुन्तास्याद्यायुधनिवहशिक्षामधिगत ॥१९॥

दशरथमिव रामश्चन्द्रसूनु यथैलो
हरिरिव वसुदेवं पुष्पधन्वेव कृष्णम् ।
मनसिशयमिवोषावल्लभोऽसौ निकामं
पितरमुचितनीत्या[२]नन्दयामास नित्यम् ॥२०॥

अथास्य क्रमवलितललितनवयौवनकलितमरुणकरनिकरकरम्बितमम्बुजमिव समुचितरत्नखचितमुज्ज्वलकलधौतमिव वपुरतितरामराजत ॥४॥

पदे कूर्माकारे करिकरसमञ्चोरुयुगल
भुजौ दीर्घौ पीनौ भुजगपतिभोगप्रतिभटौ ।
पदार्थास्तद्भूमीधृतिविधिसमर्था विनिहिता–
श्चिरादेकीकृत्य त्रिभुवनसृजा यस्य वपुषि ॥२१॥

---

१ क. बाल्योप । २. ख. 'रीत्या' ।

पदाम्बुज तस्य विधाय वेधा
'वैरिञ्चियो मूर्द्धनि किं न्यधत्त ।
सीमन्तमार्गो[र्गे?]यदिहोद्ध्वरेखा
सिन्दूररेखारुणता यदासीत्[?] ॥२२॥

अलिकफलकमस्य रम्यमूर्त्ते रजनिकरार्द्धमनोरम विरेजे ।
प्रकटतरमलेखि यत्र धात्रा भुवनविलक्षणधर्मभाग्यलक्ष्मी ॥२३॥
सहजनयनकोणरागमस्य स्फुटमिव साधुरमन्यतानुरागम् ।
रिपुरिममनुमाय कोपचिह्न किमपि चिराय बभूव सानुराग ॥
वक्षोवेश्मनि दीर्घपीवरभुजादण्डार्गलादुर्गमे
संरुध्य श्रियमुत्तमैर्गुणगणैश्चार्थत्यमून्या जय[?] ।
इत्याज्ञापनपत्रिकामिव सरोजन्मासनस्य स्फुटां
रोमालीकपटाददर्शयदिदं तस्मै नव यौवनम् ॥२५॥

उदवहदनुरूपरूपवश-
प्रतिनपे [?]स नयेन धर्मपत्न्यौ ।
हरिरिव कमलासरस्वतीभ्यां
विमलमना मुदमध्यगाच्च ताभ्याम् ॥२६॥
हृदयवचनकर्मभि पतिं तं सुदृढममू सततं निषेवमाणे ।
शुचिरुचिररुची पतिव्रतानामुदवहता धुरमञ्चितध्व्रतानाम् ॥
'भोगिनीपदभागिन्यो रागिण्योऽन्या महात्मन ।
नारीणामनुकूलस्य भार्याविद्भ्योऽ[अस्या ?]भवन्नपि ॥२८॥

---

१. ख. वैर' । २. ख. 'मञ्चित व्रतानाम् । ३ ख. भोगिन्या ।

यथायथं ताभिरुदारचेष्टितो
रघोजिनामा विहरन् हरिर्यथा ।
कृतार्थतामानयति स्म ता. प्रियाः
कृतार्थमात्मानमपि स्म मन्यते ॥२९॥

एवमस्य वर्तमानस्य श्रीगौरीरमणचरणकमलपरिमलपरिचरणचतुरतरान्त स्फुरण[1]षट्चरणस्य क्षणक्षणविलक्षणगुणगणलक्षणस्य जगद्रक्षणविचक्षणस्य श्रेष्ठा ज्येष्ठा पत्नी[2] कुलभूत्यै गर्भमाधत्त, व्यधत्त च कालक्रमेण गर्भदोहदकौतुकिनी प्रियप्रमोदम् ।

रामं कोशलजेव धीरिव नय गङ्गेव देवव्रतं
पौलोमीव जयन्तमौपनिषदी विद्येव बोधोदयम् ।
शाम्बं जाम्बवतीव साम्बगिरिशप्रौढप्रसादोदया-
देषाऽसूत कुलद्वयोन्नतिकरं पुत्र पवित्राशया ॥३०॥

नान्दीतूर्यरवेण वारवनितागीतामृतैर्वन्दिना
प्रस्तावोचितनव्यकाव्यकलया भव्यद्विजाशीश्शतै ।
वस्त्रालङ्कृतहेमहस्तिहयगोदानोल्लसच्चेतस-
स्तस्यागारमभूत् सुमङ्गलमयं साक्षात् श्रियेवेक्षितम् ॥३१॥

जानूजीति पिता चक्रे नाम तस्य सुजन्मन ।
तत. ख्यातो जानराजो राजा जनहितो यतः ॥३२॥

---

१. ख. चतुरतरान्त करण । २. ख पाण्डुलिप्यामस्यामन्ते

द्वितीयस्यां पत्न्यां[१] समजनि मुधाजीति विदित

सुत. श्रीमांस्तस्यानुकृतजनकाग्रीयचरितः ।

स साराजीनामा पुनरजनि जानूजिसहजो

मुधाजीसोदर्य्योऽभवदथ च बिम्बाभिध इति ॥३३॥

जानूजीमुधाजीसाराबिम्बाभिधा सुतास्तस्य ।

श्रीरामभरतलक्ष्मणशत्रुघ्ना दशरथस्येव ॥३४॥

दन्तैरैरावत इव भुजैरिव चतुर्भुज ।

सुमेरुरिव विष्कम्भैश्चतुर्भि स सुतैर्बभौ ॥३५॥

समुचितसमये विवाहदीक्षा

विधिवदकारयदेव देहजानाम् ।

जनककुलभवा इवाथ वध्व

प्रियहितमादधति स्म राघवाणाम् ॥३६॥

नयबलवलितस्य तस्य राज्ञ

सकलमहीवलय विजेतुमिच्छो ।

किमपि विदधती करावलम्ब

शरदथ मूर्त्तिमतीव शक्तिरागात् ॥३७॥

धवलजलदलेख व्योम निष्पङ्कशङ्क

सलिलममलहासा हंसमालाभिराशाः ।

शरदथ विदधाना सन्दधाना प्रसाद

नरपतिजययात्रासिद्धिरूपोपतस्थे ॥३८॥

---

१. ख तस्या । [क पुस्तकस्यास्मिन्नेव पृष्ठे प्रान्ते 'मकवारबायी', भागीरथी-बायी' इति लिखितं वर्तते, सम्भवत रघूजीमहाराजस्य द्वयो पत्न्योरिमे नामनी स्तः]।

व्याधूताम्बुदमधुपा घनसमयाकृष्टविनतपरिमुक्ताः ।
स्वस्थानं प्रति हरितो गता इवाकाशतरुशाखाः ॥३९॥

व्यलसदमलरश्मिचक्रवालो वियदुदधौ रजनीतटान्तलग्नः ।
स्फुटविघटितमेघशुक्तिमुक्तः स्फुटतरतारकमुक्तिकासमूहः ॥

विरजसि घनदोषविप्रहीणे गगनतले दधति स्म पक्षपातम् ।
मृदुमधुरगिरश्चिराय हंसाः शुचिकमलाकरदर्शनोत्सवोत्काः ॥

घनसमयसरोवरे निमग्नं कथमपि भावितरश्मिसूत्रचक्रम् ।
जलदपटलशैवलानुदस्य द्युमणिमसौ शरदुज्जहार यत्नात् ॥

विलसदस[म]पुष्पपत्रपाणौ क्रमपतिता मधुपा विरेजुरुच्चैः ।
अमलकनकपट्टकेषु कामं स्फुटजटिता इव नीलरत्नखण्डाः ॥

निशि कुमुदवने सरोजराजावहनि च चारुतरं श्रियो व्रजन्त्याः ।
अलिकृतपदनूपुरध्वनिश्रीरुदभवदुन्मदसारसालिनादः[1] ॥४४॥

धनेशलीलासरसः समन्ततो जगाहिरे व्योमतलं सितच्छदाः ।
चलज्जलात्क्षीरनिधेर्निरन्तरं हरेश्शरीरं लहरीभरा इव ॥४५॥

लसन्निशानायकनायकोपला
शरत्सखीसङ्ग्रथिताङ्गुलोज्ज्वला ।
निशाङ्गनावक्षसि हारशङ्कया
व्यलोकि तारायततारकाततिः ॥४६॥

---

१. ख. °सारिसालिनादः ।

शिखण्डखण्डं स्खलितं शिखण्डिनां
रेजेतरां काननगाहिनां तदा ।
पयोदजाले विगते निराश्रय
च्युतं धनुष्खण्डमिवाहिविद्विष[1] ॥४७॥

नदीषु कार्श्य शिखिनीषु मौनिता
विपाण्डुरत्वञ्च पयोमुचां दले ।
शरद्यभीष्टागमनिर्वृतात्मभि-
र्न्यासीकृतानीव वियोगिनीजनैः ॥४८॥

तुरमाणवादनपदाधिकारिणा पटहस्य सान्नहनिकेऽस्य दुन्दुभौ[2] ।
समनद्धसैन्यमपदैन्यमुद्धत विनिबद्धयुद्धरसशुद्धमानसम् ॥

सोत्साहा वासुदेवोद्वहविहगहसस्फीतफेनप्रवाहा
वाहास्ते गन्धवाहाधिकसुभगरया वाहवाहाधिरूढा ।
रूढाहङ्कारभारा पटुचटुलसटाकोटिनद्धाच्छमुक्ता
मुक्ता दोषैरनेकाकृतिजनपदजा द्वारमासाद्य तस्थुः ॥५०॥

आनीलश्वेतपीतारुणहरितकुथा सारशृङ्गारधारा[3]
धाराधाराधराभाश्चलधरणिधरभ्रान्तिमुत्पादयन्त ।
लीलोदस्ताग्रहस्तान्तरवलितपयःशीकरैर्व्योम्नि तारा-
स्तारा सन्दर्शयन्तः किमपि रुरुचिरे दन्तिनो द्वारि[4] सज्जाः ॥

---

१ अहिविद्विष इन्द्रस्येत्यर्थः । २. क 'दुन्दुभौ' इत्यस्य शिरसि लिपिकारेण 'ताडिते' इति लिखितम्, ~~ख. पटहेऽस्य~~ सान्नहनिके ताडितेऽस्य दुन्दुभौ । ३. पत्रप्रान्ते 'गान्धार' इति लिखित लिपिकारेण, किन्तु स्फुटतया स्थाननिर्देशोऽस्य न कृत, कदाचित् 'शृङ्गार' इत्यस्य स्थाने स्यादेष शब्द । ४. क लिपिकारेण 'द्वारि दन्तिनो' इति लिखितम् ।

केचिन्मुष्टिनिविष्टमड्डुकलसच्चर्मोकहस्तस्फुरत्-
खण्डा केऽपि परश्वधप्रहरणा दण्डायुधाः केचन ।
एके कुन्तकराः परे धनुधरा[१] अन्ये भुशुण्डीधरा
पादाता पदपातपीडितधरापृष्ठा. सुसज्जा स्थिता ॥५२॥
कृत्वा दिग्जैत्रयात्रामधिविजयदशम्याप्तदैवज्ञदत्ते
लग्ने सन्नाहशाली चतुरगतुरगारूढ एष प्रतस्थे ।
सैन्यैरप्राप्तदैन्यैरविकलकुलजैरैकमत्यानुकूलै-
रन्त.शूलै रिपूणामिव समनुगत' श्रीरघूजीनरेन्द्र ॥५३॥
सङ्ग्रामद्राक्पतिष्यद्रिपुभटवरणोल्लासयोग्यप्रसाधा-
प्रस्तावं सम्परिज्ञापयितुमिव नवस्वर्व्वधूभ्य पुरस्तात् ।
पादाघाताद्यनूत्थैस्सुरपुरसरिति स्नातुकामा इव द्या-
[२]मुद्युक्तास्सम्प्रयातावनिपतितुरगोद्धूतधूलीसमूहाः ॥५४॥
उद्यद्विद्वेषिभूभृज्जनगहनवनप्रज्वलिष्यत्प्रताप-
ज्वालावद्धूमजालानुकृतिबलवलद्धूलिमालामुदीक्ष्य ।
आरादारातिदारा दरदलितहृदो बाष्पधारामुदारा-
मुन्मुञ्चन्ति स्म चञ्चज्जलनिधिलहरिस्रग्धराया धरायाम् ॥
जेतु प्राचीमपाचीमतिशयमुदितोऽसौ प्रतीचीमुदीची
गच्छत्युद्दण्डचण्डद्युतिकरकलितं सैन्यमेतस्य मा भूत् ।
इत्यालोच्येव धात्री पटुचटुलनटद्घोटकोट्टङ्किटाप-
प्रोद्गच्छद्धूलिधारामयमिह विदधे नीललीलावितानम् ॥५६॥

१. 'धनुर्धरा' इति कर्त्तव्ये 'धनुधरा' इति करण छन्दोभङ्गभियैव स्यात् ।
२. ख मुद्यातास्सम्प्र ।

सर्पत्यश्वखुरोत्थपांसुपटलध्वान्ते सहस्र गवां
भास्वानेष निजूहुरे बलवलल्लुण्टाकभीतेरिव ।
आक्रान्ता करिभिर्भुजङ्गपतिना पृष्ठे धृता न क्षमा
स्थातुं यातुमपि क्षमा पतिपदं समाकम्पते केवलम् ॥५७॥

आस्माकस्फुटटापटङ्कपटलाजस्राभिघातादसा-
वस्याः सर्वजनश्रुता व्रजतु[सा], सर्वसहत्वप्रथा ।
इत्युन्मुच्य वसुन्धरामतितरामारब्धधाराधरा
व्योमन्यर्कहयक्रमक्षतिसहे बह्वव्रजन् वाजिन. ॥५८॥

मूर्च्छावतीमिव चमूचरपादघात-
जातव्यथातिशयतो वसुधामुदीक्ष्य ।
उद्यत्कृपा इव नृपालगजा महान्तोऽ-
सिञ्चन् करेण विलसत्तरशीकरेण ॥५९॥

आशानामुदितज्वरेव धमनो सौदामिनीवाम्मुचा-
माकाशाम्बुनिधेरिवोर्म्मिलतिका रत्नांशुसम्मिश्रिता ।
सैन्यां...[1]करतर्ज्जनीव वनिता प्रत्यर्थिसन्तर्ज्जनी
श्रीमत्केतनवस्त्रवल्लिरनिलान्दोलैरखेलत्तराम् ॥६०॥

समरशिरसि फुल्लं सञ्चितं दिग्दलौघै-
र्धरणिकणपरागाकीर्णदिग्दन्तिभृङ्गम् ।
ध्वजनिवहसमुद्यत्केसरैः पूर्णमध्य
कुवलयमिव सैन्यं श्रीरघूजीनृपस्य ॥६१॥

---

१. अत्राक्षरमेकमपेक्ष्यते ।

क्वचिदुद्दण्डपुण्डरीकमण्डलीमण्डितमिव बहलधवलचामर-कलापैः, क्वचिदुन्नालनीलनलिनवनमयमिव नासीरव्रवीरवरकर-कलितकुन्तकदम्बैः, क्वचिदुन्मत्तमधुकरनिकरकरम्बितोन्निद्रकोक-नदकाननबलितमिस्रच्छवि मायूरपिच्छच्छुरितारुणकेतनगुच्छैः, उत्तरङ्गतरङ्गसङ्गतमिवासङ्गरिङ्गमाणतुरङ्गसमुदायैरामत्त-मतङ्गजनिकायैरुग्रग्राहैरिव दुरवगाहमस्य सैन्यं महत्सर इव विरराज ॥६॥

सद्वंशैः परिपार्श्ववर्तिभिरविक्षत्रोपचारक्रमै-
र्नेपथ्योपचितोच्छलच्छविझरप्रक्षालितक्षोणिभिः ।
चञ्चच्चित्रपदक्रमप्रविलसत्पर्याणकल्पोज्ज्वला-
कल्पोल्लासिहयाधिरोहिभिरसौ सैन्यैर्विरेजे नृप ॥६२॥

सम्भाषास्मितसुप्रसन्नवदनं गम्भीरताया निधिं
सद्विश्वासमिवात्तमूर्तिमिव त सर्व्वो जनो मन्यते ।
नक्षत्रेषु कलानिधेरिव सरोजातेषु भानोरिवा-
म्भोराशेरिव वाहिनीषु चलिता न क्वापि तस्यौचिती ॥६३॥

सरिति सरिति हंसान् सैकते सन्निविष्टान्
सरसि सरसि नीलाम्भोजखण्डे च भृङ्गान् ।
श्रुतिपथमधुरेण व्यज्यमानान् स्वरेण
क्षितिपतिरतिमात्रं तर्कयन् मोदमाप ॥६४॥

अमलकमलकोशादुच्छलद्भिः परागैः
प्रकटितपटवासाडम्बरैः साधिवासैः ।
प्रियसुहृदिव मार्गे मालयो गन्धवाहः
समवकिरति तं···[तस्य?]स्वानुकूल्यं विवृण्वन् ॥६५॥

उदञ्चितद्विजकुलकूजिताकुलान्
परिस्फुरत्किसलयपालिसम्पुटान् ।
वने वने वनजविलोचनो द्रुमान्
व्यलोकयत् कुसुमभरादिवानतान् ॥६६॥
कुमतितिमिरचन्द्रो रामचन्द्रोपमानो
नयनकुमुदचन्द्रो भालचन्द्रोपसेवी ।
कृतकलिकुलनोदां सद्विनोदा शुभोदा
विरचितजनमोदा प्राप गोदां क्रमेण ॥६७॥

अथ ता चन्द्रचूडचूडाचन्द्रचन्द्रिकाचारुचिररुचिशुचिवीचि-वाचालजलधारा तारावलिमिव कृतावतारां संसारापारपारावार-सन्तारकर्णधारायमाणां प्रणम्य समुत्तीर्य वितीर्य च द्विजेभ्यो धनानि शीकरकुसुमनिकरैरिवाकीर्यमाणो वीर्यवान् धीरसमीर-सुभगवेशे तत्तीरदेशे स्कन्धावारमुदारमसौ विनिवेशितवान्, कृतकृत्यश्च वाक्योपहारमिममस्यै निवेदितवान् ॥७॥

जगद्रक्षादक्षा कलिमलकुलक्षालनपरा
मुदा धात्री धात्री विहरणविधात्री शिवतटा[१] ।
वहन्तीय तीव्रं किमपि वलयन्ती जलनिधि
प्रसन्नोदा गोदा कृतमुनिविनोदा विजयते ॥६८॥
इय पारावाराभिसरणमुदारावतरणा
स्फुरत्ताराकारामलपृषतभाराचितनभा ।
कृपाधाराधारा तव सलिलधारा भगवति !
सुधाधारासाराधिकमधुरिमा राजतितराम् ॥६९॥

१. 'शिवजला' इति लिखित्वा लिपिकारेण शिवतटेति संशोधनं कृतम् ।

अपङ्के त्वत्पङ्के लगति परमङ्के सुकृतिना
सखी शङ्के सङ्केतयति सुरपङ्केरुहमुखी।
अथ स्नाता याता परममभिजाता पदममी
वृथा यायायाता सुचिरमबिजाता भवति सा[?] ॥७०॥

स्वनिश्रेणीश्रेणोमिव वियति वेणीसमजले
स्ववीचीभिर्नीचीकृतहिममरीचीभिरयसि ।
त्वदासङ्गाद् गङ्गाधरनगरसङ्गाहनसुखं
नृणां मन्ये धन्ये निगमननगण्ये करगतम् ॥७१॥

असारे ससारे विषयविषधारे भ्रमिवशा-
दपारेऽकूपारे कृतसुकृतवारे प्रतरता ।
गुणव्याप्ता प्राप्ता सकलजगदाप्ता सुकृतिना
कलौ काले नौका नियतमवनौ काऽपि भवति ॥७२॥

विदूरा त्वत्पूरापतितदृगसूरात्मजभयो
जनो मात शातक्रतवपदशातस्य विषय [?] ।
पय पानात् स्नानाज्जपविधिविधानाच्छिवपद
दवीयो नेदीयो भवति यदणीयोऽप्यतिगुरु ॥७३॥

चिरं तन्त्र मन्त्र परिचरतु मन्त्र जपतु वा
तपस्यामायस्याचरतु वरिवस्यामपि सताम् ।
तटे यावन्नावस्थितिरिह तवावद्यदलने
कलौ तावन्नावस्फुरति फलमावश्यकमपि ॥७४॥

सदामोदा गोदावरि सुपरमोदारमतय·
स्थिता नत्वा नत्वा जहति खलु न त्वा[त्वां?]क्षणमपि ।
तटप्रान्ते कान्ते जननि वसता ते ननु सतां
गतध्वान्ते स्वान्ते चिदुदयति शान्ते तडिदिव ॥७५॥

सितारुणै. क्वापि सितासितैः क्वचित्
सितै· क्वचित् क्वाप्यरुणैः पटालयै· ।
विचित्रधातुच्छुरितै. शरद्घनै–
र्हिमाद्रिवत्तच्छिबिर व्यरोचत ॥७६॥
सुमज्जितैः पायितभोजितासितै. सुमार्जितैर्वीतपरिश्रमैर्गजैः ।
हयैरथोच्छ्रैरपि भारवाहनैस्तदञ्चितं सुस्थितवीरमावभौ ॥
तत्र त्रिरात्रमतिमात्रमहामहात्मा
निर्विश्य शात्रवजयाय कृतप्रतिज्ञ ।
दिङ्मण्डलीमुकुटमण्डलपद्मरागे
सुप्रस्थितो दिनपतौ कृतपद्मरागे ॥७८॥

चतुरगतिचतुरङ्गचमूचरचरणचक्रचूर्णितधरणिचक्रचञ्चित-धूलिधोरणितिमिरनिकरतिरोहिततरणिकिरणसरणौ भीरुभर-भीषणभूरिभेरीभारभाङ्कारभरितदिग्धरणौ भूषणमणिकिरण-श्रेणिविद्युद्युद्योतविद्योतितसरणौ नीरधर इव तत्र वीरे प्रसरति सति हृदयेन विशङ्कमानं राजहंसमण्डल नयेनाविनयेनापि प्रणयेनाप्रियमपि तथ्यं हितमिदमगददनूनगन्धमम[१] रगुरुसदृशमति-प्रसरः सचिवविसर. ॥८॥

१. क. अत्र किञ्चिदस्फुटमिव लिखित लिपिकारेण ।

भूगोलं दोलति द्राक् किमपरमधिकं दोलति व्योम गोलं
जानीमः श्रीरघूजीनृपतिकुलमणिः प्रस्थितो दिग्जयाय ।
प्राकारः शीर्यमाण स्खलति तदधुना सम्पुटीकृत्य पाणी
किन्तत् कण्ठे कुठारं दधदनुसर त सच्छरण्यं वरेण्यम् ॥७९॥

उन्मीलद्वाजिराजिप्रखरखुरपुटीखण्डितक्ष्माविनिर्यद्-
धूलीधाराभिराराद् विवलितपरिखाः कल्पितानल्पशस्त्राः ।
यावद् धावन्ति नामी बहलहनहनारावविस्फोटितारि-
श्रोत्रद्वारा रघूजीनृपतिवरपुरोगास्यरोगाश्ववारा. [?]॥८०॥

आनीलश्वेतपीतारुणहरितवलच्चित्रकाञ्चत्पताका-
सन्नद्धेन्द्रायुधाङ्का रुचिरविरचनाचक्रचक्रताका [?] ।
उन्नादाम्भोदवृन्दद्युतिरतिविशदं दूरतो दानवर्षं
वर्षन्ती यावदाक्रामति न तव पुरं तद्गजाधीशमाला ॥८१॥

कोषादुत्पाट्य रोषादसिमसितरुचिं लीलयोल्लासयन्त-
श्चञ्चच्चन्द्रालिचर्म्माण्यतिशयकलया लालयन्तो वलन्त ।
पादन्यासैर्धरित्रीं फणिफणफलकाधिष्ठितां कम्पयन्तः
पादाता यावदस्य त्वदभिमुखममु[पा?]यान्ति नामी सुजाता ॥

त्वदधुनैव-

द्विषन्नृपारण्यहिरण्यरेतस
शरण्यमेत नृपतिं सुमेधसम् ।
रघोजिनामानमुपैहि सन्नति-
र्म्महत्तमे हि [?] श्रियमातनोति भिः [?]॥८३॥

एवमादिमुपदेश निशम्य केचिद् वेतसा इव स्वयमेव नम्रा बभूवु । परे धन्या वीरम्मन्यास्सहायसम्पन्ना योद्धव्यमिति युद्धमेव बहु मेनिरे, तेनिरे च वहुविधां नगरगुप्तिम् ॥९॥

दूरात् केचन केचिदीक्षणपथादन्ये पुरोवेष्टना–
देके युद्धसमुद्यमात् कतिपये युद्धातिबद्धादरा ।
नेमु स्वस्वदिगुद्भवोत्तमपदार्थोपायनप्रग्रहा
सद्यस्त्यक्तदुराग्रहा नृपतयस्त सुप्रसाद नृपम् ॥८४॥

अथ दुरभिमानिनं देवदुर्गेश्वर दुर्गेश्वर इवान्धकं विजेष्यमाण परित सरित पर्वताश्च विलङ्घ्य सर्वत समवरुद्धवीवधासारप्रसार[1] महत्या सेनया दुर्गम देवदुर्गमवरुरोध । महति सम्पराये वर्तमाने निसर्गेण सम्पन्नबलमपि देवदुर्गेश्वर कतिपयदिनादेव निरवासयत् ॥१०॥

अथ–

आमत्तद्विरदगतेन घाण्टिकेन
क्षत्रा स्व विजयमघोषयत् स पुर्याम् ।
आश्वास नगरजनेषु च व्यधासीद्
वीराणां रणविजयावधि प्रकोप ॥८५॥

नानोपायनपाणिभि स [2]निगमश्रेणीगणैरर्चित
स्वीय तत्र निवेश्य गौल्मिकबलं दुर्गे महादुर्गमे ।
नाम्ना नागपुर पुरन्दरपुरस्पर्धाकर विश्रुतं
भूचक्रे सकले पुर किल परिश्चक्रे स्ववासोचितम् ॥८६॥

---

१. वीवधो धान्यादिप्राप्ति, आसार सुहृद्बलम्, प्रसारस्तृणकाष्ठादे प्रवेश. । २. निगमा. भ्रमणशीला वणिज इत्यर्थ. ।

अथ देवदुर्गेश्वरोऽपि बहूनुपायान्विधायाप्यलब्धसिद्धिरनन्य-गतिकतया परमेश्वर तमेव शरणमनुप्रपन्नस्तेन दत्ता जीविका-मवलम्बमानस्तदनुवर्ती सवृत्त ॥११॥

रघुराजोऽपि–

प्राप्य चन्द्रपुरमिद्धशासनो
युद्धशौण्डमपि गोण्डभूपतिम् ।
निर्जिगाय रभसाद् विवर्द्धयन्
वाजिवारणरथोद्धता चमूम् ॥८७॥

तत्र पादगतभूतभर्तृका
सद्वराभयकपालकर्तृका ।
कालिकारुचिरपूजि कालिका
ऽकारि काऽपि च महीभृता स्तुति ॥८८॥

तथाहि–

जय जयागम निगमकाये त्वमसि गतिरिह [शम्भु?] जाये ।
त्वदिदमुदयति देवि माये तिष्ठति त्वयि लीयते ॥

भ्रमति नाथितपशुवदालयकामिनीधनकामनामय–
मत्र यावदिदं निरामय नग्मते [?] न हि गीयते ॥

सजलजलधरजालनीले तरलतरकरतालशीले ।
बहलचलविकराललीले कालिके कलिकालिके ॥

उरसि विलसितमुण्डमाले विकटकटकटदशनजाले ।
सह[ज?]खलखलहसनताले लम्बकुण्डलपालिके ॥

विहितबहुविधभावमानववसुविभावसुवरुणभानव- ।
विधिबृहस्पतिरुद्रवासवपालिके सकपालिके ।।

दुरितदारुणदारुदारिणि सकलमुनिजनभद्रकारिणि ।
मधुमदारुणनयनधारिणि लालिके कुटिलालिके ।।

हरितपीतकधवलरक्ते विविधरूपिणि परमशक्ते- ।
ऽखिलपुमर्थसमर्थभक्ते श्रीभवानि भवानिशम् ।।

सदयमानसवृत्तिरिष्टा श्रीरघूनृपभक्तितुष्टा ।
शमितसाधकलोककष्टा त्वद्बलेन भजानि शम् ।।८९।।

अचलेशशिवं सपर्यया
परया सोऽथ च पर्यपूपुजत् ।
कुसुमाञ्जलिपञ्चकोपमं
विदधे तस्य च पद्यपञ्चकम् ।।९०।।

नवे दान्ते कर्म्मण्यनवर[त]रक्तस्तव पद
न वेदान्ते सक्त परममवगन्तुं प्रभवति ।
भवत्कारुण्यात्तात्त्वमसिपदतद्भावगमतो
विलीनायां मायामयजवनिकायां स्फुरति तत् ।।९१।।

स्वत सत्प्रामाण्ये भगवति चिदानन्दभवने
कृपापारावार[रे ?]त्वयि भवति नो काऽपि विमतिः ।
तथापि त्वन्मायापिहितनयनानां जडधियां
भवन्ति भ्रान्ताना स्वपरपरिमोहा विमतय ।।९२।।

हृदाकाशे सन्तं रविमिव लसन्तं शिव न यद्
भवन्तं वीक्षन्ते गतिमनुभजन्ते बहुविधाम् ।
प्रसन्नान्धो [?] यन्नाकलयति पुरोवर्तिनमय
न स स्थाणोर्दोषो भवति यदपीह स्खलति स. ॥६३॥

धरित्रीकीलालानिलगगनतेजोमयमिद
जगत्त्वत्सत्तातोऽसदपि सदिवाभाति भगवन् ।
जवारुण्यं नूनं स्फटिक इव मायाविलसितं
त्वयि स्वच्छन्दाच्छे परचितिसमारोपविषय[·][1] ॥६४॥

दयासिन्धो शम्भो गिरिश गिरिजावल्लभ विभो
स्मराराते गङ्गाधर पुररिपो शङ्कर शिव ।
त्वदीयोऽहं वन्दे तव पदरविन्दे, स्फुरति मे
मन·पद्मे नित्ये सगुणमगुणं वा तव वपु· ॥६५॥

वीरप्राग्रहरोऽर्च्चितस्मरहरो विद्वेषिभूभृद्वधू–
वैधव्यव्रतदानपण्डितभुजादण्डो द्विजेभ्यो ददौ ।
ग्रामान् सस्यनिधीन् धनञ्च विविधं हेमाश्वहस्त्यादिकं
ते तस्मै व्यतरन्नतीव सुखिता भव्याय दिव्याशिष ॥६६॥

पृथुरिव पृथुकीर्तिर्वृत्तिदाता प्रजानां
रघुरिव लघुजेता वैरिवीरव्रजानाम् ।
दशरथ इव रक्तो धर्मपाले सुमन्त्रे
समधिगतसुमित्रः सच्चरित्रः स रेजे ॥६७॥

---

१. पत्र खण्डितम्, विसर्गोऽत्र भवेदिति मन्ये ।

विजितानुगीकृतमहीशवाहिनी-
परिपूर्यमाणपृतनानदीपति ।
अनुकूलमारुतधुतध्वजांशुकै-
र्हृदय व्यतर्जयदिव द्विषामसौ ॥९८॥

ततश्च—

अवजित्य···[1]रणमप्रयत्नतो
नयरत्नरोहणगिरिर्महीपति ।
यशसा चकार सहसा दिशस्तत
कमलादुकूलधवला बलान्वित ॥९९॥

कतिपयेषु दिनेषु गच्छत्सु सत्सु—

श्रीमानसावथ महारतिजंगखाना[द्]
दुर्गाधिपत्यमधिगत्य विवृद्धमानात् ।
अंश चतुर्थमवनीतिलको ग्रहीतु
चक्रे मनोऽप्रतिहतप्रसरोऽरिचक्रे ॥१००॥

दूतं प्रस्थापयामास बङ्गराजं प्रति प्रभु ।
नखच्छेद्ये कुठारस्य प्रयोगो नोचितो यत ॥१०१॥

अथावधूतदूतपूतवचनचयस्य योद्धव्यमिति कृतनिश्चयस्य बङ्गाधिपस्य सुयोधनस्य मानभङ्गाय बहुयुद्धप्रसिद्धविजयभीमसेनार्पितप्रतीतिर्नासत्यजातविहितप्रीतिर···तनयाधिष्ठितो युधिष्ठिरो नागपुरेश्वर. सौरसैन्धववारिधारामिवात्युदारामनिवारितप्रसरामवदारितभूधरगहनविसरामुन्नादमुखरितदिगन्तरामनन्तरायामा—

१. लिपिकारेण नात्र लिखितम्।

त्मन· पृतनामनुकर्षन् भगीरथ इवाप्रतिरथ पूर्वदेशाभिमुख सुमुखः प्रतस्थे, नयविनयविराजमान श्रोजानुजीनामान श्रेष्ठ प्रेष्ठ पुत्रं पुररक्षायै च न्ययुङ्क्त ॥१२॥

अथ–

यशसे विजयाय सम्पदे स्यादभियातव्यविपक्षदेशभङ्ग ।
इति देशममुष्य वीरमुख्य कटकादि स्वबलैरभञ्जयत् स ॥

स्थाने स्थाने नियुक्तान् यवनकुलभुवा बङ्गराजेन जीव–
ग्राह जग्राह काश्चित् प्रबलबलभृतो गौल्मिकस्थानपालान् ।
युद्धे काश्चिज्जघान प्रसभमभिमुखान् नाम विश्रावयन् स्व
श्रीमान् धीमान् स एव व्यहरत कटके भीमसेनानुयात ॥

नो यावत् प्रणिधिमुखान्निशम्य[१]
प्रक्षोभ निजनगराद् विनिर्जगाम ।
वंगेश पुरपरिरक्षणाय योधा-
नाज्ञाप्य प्रचुरतरैर्बलै समेत ॥१०४॥

त्रिचतुरदिनगम्य मार्गमेकाहमात्राद्
व्रजदलघुरयेण श्रीरघूजीनृपस्य ।
चतुरतुरगराजिभ्राजि सैन्य तु तत्र
स्थितमिव समरौत्सीत् पत्तनं तावदस्य ॥१०५॥

बङ्गनाथोऽपि योद्धुमनसामग्रीभूय समरसामग्रीसमेतो नगर-मवरोद्धुमायातमेनमभ्यपद्यत सद्य ॥१३॥

---

१. क. लिपिकारेण न लिखितम् ।

उन्नद्धैर्यवनपतेर्बलै रघूजी-
सैन्यानां महा[1] [सह]करिणामिव द्विपेन्द्रै. ।
सङ्ग्रामोऽभवदसमो महास्त्रदण्ड—
प्रस्फारस्फुरणपरिस्फुटस्फुलिङ्ग ॥१०६॥

उद्धावद्धयपटलीखुरोद्धतोर्वी—
धूलीभिर्विहितपयोदचक्रवाले ।
उद्धूता· सदसिलता. परिस्फुरन्त्य·
सरेजुस्तनित[2] इवाक्षि मुद्रयन्त्य· ॥१०७॥

नव्यभव्यसुभटवरवल्लभवरणसमागतानुरागभागमरगणा—ङ्गनाङ्गनानाभरणभरावरणजवनिकायमानरजोनिकायकलितगगनाङ्गणे रिङ्गदुत्तुङ्गतरङ्गमतङ्गजपादाते जगदाश्चर्य्य-कारणे महारणे वर्तमाने विजयमिच्छतो भोसलाकुलकुमुदाकरकला-करस्य दैन्याहितेन महितेन हितेन सैन्यसमुदायेन प्रभूततयाऽनेको-पायेन परितः संक्षिप्य··[3] हृतो गर्भवास इव स्थितो व्यवस्थितोऽसौ स्वकृतकर्मविपाकवैषम्यवैशसमनुभवन् कथं कथमप्यात्मानं मोच-यित्वा स्वकीयं नगरमेव प्रविवेश, निदिदेश च मन्त्रणाय धिषणाव-धीरितधिषणानमात्यगणान् ॥१४॥

छद्मास्मिन् प्रभवति नापि भूरिबोधे
नो भेदप्रसर उदारशुद्धयोधे ।
दृष्टेयं पुनरिह विग्रहस्य निष्ठा
कर्त्तव्यं वदत विचार्य सुप्रतिष्ठाः ॥१०८॥

---

१. क. पत्र खण्डितम्, केनचिदत्र 'महा' इति सशोधन कृतम्, किन्तु 'सह' इति पाठ. समीचीन. प्रतिभाति । २ अत्र 'तडित इवेति पाठ उचितः । ३. पत्रं खण्डितम् ।

अथ [सम?]रजयप्रहर्षिणीभि

सेनाभि सह विविधास्त्रवर्षिणीभि ।

आयास्यत्ययमिह दीर्घसूत्रताया

भीत्येव द्रुतमपयाति नीति [1] ॥१०९॥

तत सम्पुटीकृत्य पाणी प्रमाणीकृतकृत्यो भृत्यवर्गो वाणी-मिमामभाणोत्—सुगृहीतनामधेयस्य देवस्य चित्तावृत्तिभित्ति-लिखितपठितमेव निखिलनीतितन्त्रतत्त्वमस्ति । तथापीयमस्म-दनुरोधिता, तदेवमभिधीयते देव ॥१५॥

ये सम्यङ् मनसि विविच्य साधु बुद्ध्या

स्व कार्यं परिणतिशुद्धमारभन्ते ।

तैरेव प्रभवति रत्नभूरिय भू-

स्तान्येव श्रयति गुणाश्रयोन्मुखी श्री ॥११०॥

अभिलषितममुष्मै स्वं चतुर्थांशयोग्य

वितरकमपि देश श्रीमता धत्स्व साम[?] ।

विहर जनपदे त्व सानुगो निर्विशङ्कं

बलवति नतिरेव श्रेयसे च श्रिये च ॥१११॥

समरशिरसि युद्ध्वा सार्धमुर्वीशवीरैः

किमपि सफलयन्तो भूभृतो बाहुजन्म ।

तदुदयनिजजानी प्रेक्ष्य[?]सन्धि वितेनु-

र्जगतिनिजककार्यस्योद्धृतिर्बुद्धिकृत्यम् ॥११२॥

---

१. पत्रं खण्डितम् ।

वेतसो घनजवारिवेगतो रक्षति स्वम[क?]रणस्य नम्रताम् ।
स्तब्धता दधदहो तटद्रुमो न स्थिति भजति मूलवानपि ॥
सकललोकमनःपरितोषको न खलु कश्चिदुपाय उदीक्ष्यते ।
स्वहितमेव विधेयमतो बुधै किमु करिष्यति दुर्मुखदुर्जन ॥

इति स्वयमपेक्षितो महाजनमहितो हितोपदेशो बगेश्वरस्य हृदयरङ्गे कुमुदाकरकोशे तुषारकर[कर]निकर इव सप्रकाशमविशत् । ततो दूतद्वारा धर्मविजयिना महोदारप्रकृतिना सदाकृतिना सुकृतिना रघूजीनृपतिना सह सन्धि विधाय हेमहयहस्तिरत्नानि प्रयत्नादुपहृत्य ·[१] मण्डलञ्च प्राभृतकीकृत्य कृतकृत्य इव नित्यमुद्युक्तमना बङ्गदेशमनाकुलमपालयत् ॥१६॥

श्रीमान् निर्जिजतर्जिजतप्रतिबल ·[२] महोभर्ज्जितं
शौर्य्येणार्ज्जितमूर्ज्जितं स कटक चक्रे प्रजानां हित ।
प्राक् पत्राण्युपशोषयत्यपहरत्यायान् मधु शाखिना ·[३]
श्च्ये[?] ·[४] पुनरात्मन किसलय पुष्पं विधत्ते फलम् ॥
पदे पदे तत्र मनीषितार्थहृन्मनीषिवृत्ति द्विगुणीचकार स ।
सुधा [५] वसुधा सुधाकर करोति मोदं कुमुदे विशेषत· ॥
स स्थानान्तरिक निधाय सदधिष्ठानाय मानाधिकं
प्रज्ञाविक्रममा ·[६] समुदितं तत्र प्रजासम्मते ।
सत्कारञ्च विधाय सङ्करकृतां सम्मानदानादिना
श्रीमान् नागपुरं प्रति प्रमुदितो धीमान् ·[७] शनै ॥११७॥

१ क. २ ३ ४. पत्र खण्डितम् ।
६. क. पत्र खण्डित, पर केनापि, "जन" इति प्रान्ते निर्दिष्टम् ।
७. क. पत्रमत्रापि खण्डितम्, केनापि 'प्रस्तस्थे' इति निर्दिष्टम् ।

अथ नागनगरादनतिदूरदेशे निवेशितमहासेनसेनमतिजङ्घा-लवार्त्तिकमुखादुपश्रुत्य सौभ्रात्रसौहृदसौरभ्येण परम्परानुकूलैं समं भ्रातृभिर्महता च परिवारेण समन्वितो महत्तारेण हर्षभरेण [1]नगरेणमानिव[?]महाराजकुमार कुमार इव दानवविजयादुपागतं महादेवं, पितर प्रत्युद्गच्छति स्म ॥१७॥

वल्गद्वल्गुविभागवल्गितगति वाह समुन्नर्त्तयन्
भाति स्म प्रतिसन्दधत्सुघटितन्यासं शिरोवेष्टनम् ।
यस्य प्रेङ्खदुदारकुण्डलमजातश्मश्रुरेखं मुख
प्राप्तो दौरधुरी[?]धुरां शशिधरो नैवानुकर्त्तु क्षम ॥११८॥

मन्दं मन्दममन्दमेदुरहृदानन्दादरान्दोलनो-
दञ्चत्कुण्डलगण्ड[मण्ड]लमुखाम्भोजोऽनुयातो जनै. ।
स्निह्यत्पौरवधूविलोचनमयैरुन्माललीलोत्पल-
श्रेणीदामभिरर्च्यमान इव स श्रीमान् कुमारोऽव्रजत् ॥११९॥

जानूजीपृतनाकलिन्दनया श्रीमद्रघोजीचमू-
गङ्गायां मिलिता भुजोर्म्मिवलिताऽप्येषा विशेषादभूत् ।
तस्मिस्तीर्थवरे समेत्य कृतिन स्व काममासादयन्
सर्व्वाशासु विसर्पति स्म परितो गम्भीरधीरध्वनिः ॥१२०॥

द्वारे [2]वल्लभपालपाणिकलितस्थैर्याद् विनीतादसा-
वश्वेन्द्रादवरुह्य सम्भ्रमनतैर्दौवारिकैर्नन्दितः ।
राज्ञो दूरतरप्रसारितभुजस्याश्लेषमत्स्यव्रत [?]
पादाब्जं पटमण्डपे स्थितवतो भक्त्यानमद् भ्रातृभि ॥१२१॥

---

१. नगरेऽमानिवेति स्यात् । २. वल्लभ सल्लक्षणतुरङ्गम इत्यर्थं ।

पिताऽप्येनमुत्थाप्य पुररक्षणधुरन्धर पुरन्दर इव जयन्त वदति स्म—॥१८॥

उद्वोढुं सुदुरुद्वहां पितृधुरां नाभ्युत्सहन्ते सुता
सत्पुत्रास्तु भवादृशा कतिपये स्वास्थ्येन ता बिभ्रति ।
शुभ्रांशोर्भजते पदं किमु परायत्तास्थितिर्बोधन[१]
कि शक्नोति शनैश्चरो विचरितु गत्या सहस्रद्युते ॥१२२॥

प्रसुवते तनयानखिलान् जना
अपि च कूकर[?]शूकरजम्बुका ।
कतिपये जनयन्ति भवादृशं
सुकृतिनं कृतिन· सुस[ष?]माधिकम् ॥१२३॥

तदहमद्य छत्रवतां धुरमारोपितो रामेणेव राजा दशरथो भ्रातृसहितेन भवतेति । सभासदो व्यवोचन्—॥१९॥

अयं सुतो यस्य स एव पुत्री
त्वं यस्य तात: पितृमान् स एव ।
कर्मानुरूपं कृतमत्र याभ्या-
मनन्यसामान्यगुणोदयाभ्याम् ॥१२४॥

तत शुभे मुहूर्त्ते नगराभिमुख महाराजे प्रस्थिते सति—
औत्सुक्यादाह्वयन्तीरिव पवनचला वैजयन्तीर्व्वहन्त
प्रासादा वैजयन्त सरससुमनसा सञ्जयन्तोऽधिवासै: ।
पौरैरारेभिरे द्राक् पथि पथि विविधा: प्रक्रिया माङ्गलिक्य:
सद्वृद्धस्त्रैणपौस्नै पुनरपि विहिता आशिषो वैजयिक्य. ॥

१. बुधग्रह इत्यर्थं ।

कर्पूरक्षोदगर्भैर्म्मलयजसलिलैश्चर्चिता सम्प्रसर्पद्-
धूपामोदा सवृन्तक्रमुककदलिकासन्निवेशाभिरामा ।
उन्मीलत्पूर्णकुम्भा सकलपुरवधूहावभावाभिरामा
रेजे रामेव राजागमनमहमहोल्लासभू पूस्तदानीम् ॥१२६॥
तन्वानैर्निजसद्मनि स्थितसुधाकर्पूरपूरपूर[?]
कुन्देन्दीवरवृन्दवन्दनमधिद्वारञ्च दृप्तिभ्रमै ।
कृत्वा दामदुकूलचन्दनसुतौ माङ्गल्यकुम्भौ कुचा-
वुत्कण्ठोन्नतकण्ठमस्य ददृशे मार्गो मृगाक्षीजनै. ॥१२७॥
प्रविशति पुरमस्मिन् सानुयात्रे सपुत्रे
गुणमहति रघूजीनाम्नि विख्यातधाम्नि ।
अकलितगृहकृत्या: सौधजालानि हर्षा-
दधिरुरुहुरतीवोत्कण्ठिता. पौरनार्य्य ॥१२८॥
प्रत्युद्गम्य पुरो जवादिव परिष्वज्य प्रमोदाश्रुभि
पाद्यादि प्रतिपाद्य पक्षवसनैरावीज्य कान्त्यम्बुभि ।
सस्नाप्य प्रणयामृतेन च मुहु सलप्य चक्रे प्रभो-
रातिथ्यं श्रुति[[1]शास्त्र?]पारगतया दृष्टि कुरङ्गीदृशाम् ॥
गुञ्जन्मञ्जुमिलिन्दपुञ्जकुसुमोदञ्चत्प्रवालैरह-
प्रारम्भे हिमबिन्दुभिन्नविकिरैर्वन्यैर्वसन्त यथा ।
तं पौरप्रमदास्तथा करतलैरापर्वभागोत्थितै-
राशिञ्जद्वलयैर्नखांशुसनयैर्लाजोच्चयैराकिरन् ॥१३०॥
परस्परममन्[?] ।

---

१ अत्र लिपिकारेण न किञ्चिल्लिखितम्, 'शास्त्र' इति पठितु शक्यते ।

विदधदमृतपारणं दृशोरभिनवचन्दनचर्च्चनं तनौ ।
अयमुदयति पूर्णचन्द्रमा जनजलधिं वलयन् स्वया रुचा ॥

एतत्कर्म्म महीश्वरेण सुकरं किं वानरैर्वाऽमरै [:]
कृत्वा सङ्गरसीम्नि वीरकमलां सद्यो गृहीत्वा बलात् ।
नाहङ्कारलवोऽस्य कोऽपि विनयालङ्कारिणो लक्ष्यते
राजेन्द्रस्य किमञ्चतो हि विकृतिं रत्नाद्रिरत्नाकरौ ॥१३२॥

लावण्यैरविमुक्तमङ्गमखिल शोणप्रभासौ करे [रौ ?]
हासश्रीर्मधुरा सितासितमिदं चक्षुर्मुखं पुष्करम् ।
श्रीरङ्गस्थलमस्य बाहुयुगल वृक्षो विशालोदय
चेतोऽस्माकमिहानुरक्तमनिशं नाप्नोति मुक्तिं कुत ॥१३३॥

केयूराभरणालवालविलसत्सौन्दर्यसारामृतः
प्रोदञ्चत्करपञ्जरो नखरुचीसन्मञ्जरीमञ्जुल ।
विश्वस्याभयदानकल्पविटपी बाहुर्विभोर्भासते
यच्छायामवलम्ब्य हन्त सुमन सार्थाः सुखं शेरते ॥१३४॥

सतां वृत्तिं भूमाववितुमवतीर्णा भगवत
प्रियः पत्युर्मूर्त्तिर्नियतमयमत्यभुतगुण ।
[1]यदुच्चैर्गोपालीस्तरलयति सौन्दर्यकलया
न वा कं सानन्दं प्रकटयति संसारतिलकः ॥१३५॥

---

१. इदमस्फुटमिव किञ्चित्, मया 'यदुच्चै'रिति पठितम् ।

वङ्गेशस्य मुख नतीकृतमनेनोन्नामित स्वानन<br>
वीरश्रीश्च वसुन्धरा च महती कीर्तिश्च पाणौ कृता ।<br>
अन्त शल्यमपाकृत सुकृतिना तत्तु द्विषामर्पित<br>
राजेन्द्रेण विना व्यय किमपर क्रीता त्रिलोकी गुणै ॥१३६॥

[1][सौ]भाग्यसौभाग्यतोऽस्माकमेति सोऽय सुतै समम् ।<br>
लावण्य यस्य पिबता कृष्टात्तु [?] द्विगुणायते ॥१३७॥

इत्यादीनि पौरवधूजनस्य वचनानि श्रवणयोरतिथीकुर्वन् अतन्द्रमुखचन्द्रचन्द्रिकाचयपरिचयचमत्कारेण लोचनचकोरमस्य कृतार्थयन् राजमार्गेण मन्द मन्द सञ्चरति स्म ॥२०॥

जित्वा शत्रुगण स्वधाम विशत प्रीति रतिं तन्वतो<br>
हर्म्याग्रस्थितयो विभिन्नगतयो दोलायमानेक्षणा ।<br>
प्रान्तप्रङ्खदुदारमीनकनकस्तम्भप्रकाशैर्निजै-<br>
रङ्गैरस्य वितन्वते स्म सुदृशो मीनध्वजत्व स्थिरम् ॥१३८॥

स्मितेन कञ्चिद् वचनेन कञ्चित्<br>
कञ्चिन्नृपोऽक्षिभ्रुवविभ्रमेण ।<br>
सम्भावयन् पौरजन समेत<br>
यथोचितं प्राविशदात्मधाम ॥१३९॥

तत्र—

सुनिश्चिताभिर्व्यवहारकृत्ये<br>
प्रतिष्ठिताभि शुभदर्शनाभि. ।<br>
कुलाङ्गनाभिः करदीपिकाभि-<br>
र्नीराजितोऽराजत राजराज ॥१४०॥

---

1. क. 'सौ' इत्यधिकम् ।

अथ निजकुलदेवताया यथाविधि पूजामारचय्य धर्मासनमधिष्ठित सुप्रतिष्ठितनैष्ठिकब्रह्मिष्ठवसिष्ठगरिष्ठहितपुरोहितशिष्टसम्मत स्वराज्यमण्डलमखण्डितायति प्रतिपालयन् धर्मञ्चार्थञ्च कामञ्च परस्पराविरोधेन ज्येष्ठ पार्थ इव पार्थिवश्रेष्ठ सुरज्येष्ठनिर्दिष्टेन वर्त्मना यथायथमारराध। श्रौतस्मार्तक्रतुक्रियाकलापप्रक्रियावित् तेभ्यो विक्रियाविरहितचित्तेभ्यो भासुरेभ्यो भूसुरेभ्यो बहुविधसम्पत्तिवृत्तिवितरणेन नित्यनैमित्तिककाम्यकर्मकदम्बककरणेन यथार्थभाषणेन निरुपधि परदुःखप्रहाणचरणेन च कलिकाललगुडप्रहारविकलपदस्य भगवता वृषस्य चातुश्चरणस्थिरता विदधानो जगत्पातुर्वृषध्वजस्य कृपाबहुमानपात्रमतिमात्रमसौ बभूव ॥२१॥

धर्मानपेतेन पथा समर्ज्जयन्
प्रपालयन् बुद्धिबलाद् विवर्धयन्।
सुतीर्थहस्ताम्बुरुहे निवेशयन्
कृतार्थतामानयति स्म स श्रिय ॥१४१॥

रामक्षेत्रे पवित्रे त्रिभुवनविदिते तुङ्गसिन्दूरशैले
प्रासाद शम्भुशैलद्युतिममलमती रामभद्रस्य भद्रम्।
वापीञ्च ज्ञानवापीमिव शिवसलिलां कारयामास तस्मिन्-
न्निष्टापूर्त्तप्रणेता रघुपतिचरणाराधने दत्तचेता ॥१४२॥

आरामं फलपुष्पपल्लवभरव्यानम्रशाखाशिखा-
लीलान्दोलनलोलपक्षिमधुपप्रारब्धगीतध्वनि [म्?]।
नानानोकहगुल्मगुच्छलतिकालेखाभिराम रमा-
क्रीडास्थानमिव व्यधाद् वसुमतीशक्र सदा नन्दनम् ॥१४३॥

धारायन्त्रविसृत्वराभिरभित कूपोद्गताभि पयो–
धाराभि परिपूर्यमाणविपुलावाला रसालादय ०।
शाला यत्र समाह्वयन्ति पथिकान् बालप्रवालाङ्गुली–
मालान्दोलनकैतवेन विलसद्विश्रामशालायिता ॥१४४॥

लवणिममधुरिमचतुरिममहिताभिर्दोषरहिताभि ।
सह ताभि स हिताभिर्व्वनिताभि कृष्ण इव रेमे ॥१४५॥

भ्रूलतिकाभङ्गिनिर्द्दिष्टेङ्गितविज्ञविशिष्टभृत्यग्राहितदुर्गम्-- अबहुतरवैरिवर्गदुर्गस्य निसर्गदशभुजाकुलस्य स्वपुरमधितिष्ठतोऽनासक्ततया वैषयिकसुखमनुभवतो भवतोषवतोऽत्रभवतो रघूजीमहीमघोनोऽनघोदारकीर्तेरखण्डप्रतापमण्डलश्रवणेन जातामर्षोऽकृतपरामर्षो दुराधर्षो यवनजातीयो[ऽ]विजातीयोत्कर्षोदयकामो बहुसङ्ग्रामोदारहर्षो डिल्लीश्वरपूर्व्वामात्यो जात्योदञ्चितसायक उरङ्गाबादनगरनायक आत्मानुरूपेण स्वपरीक्षितरूपेण विदिताभिप्रायेण पारसीकप्रायेण महताऽनीकसमुदायेन स्वमण्डलपर्यटनव्याजेन बराटसीमान्तनिवासमकरोत् ॥२२॥

श्रीभोसलाकुलकलानिधिरप्यवेत्य
जङ्घालवार्तिकमुखात् स्वजनार्तिहर्ता ।
त प्रत्यगात् स जितकाशितया प्रतीतो
गन्धद्विप· किमु सहेत परेभगन्धम् ॥१४६॥

वीरश्रीकरपीडनोत्सवकृतारम्भावुभौ भूपती
वलगद्वल्गुपदातिजातिगजतागन्धर्व्व[1]वृन्दोज्ज्वलौ ।
भेरीभाङ्कृतिपूरितक्षितितलावन्योन्यमाक्षेपिणा–
वम्भोधी इव सङ्गतावभवतामन्योन्यतुल्याविमौ ॥१४७॥

---

१. उपरि पत्रान्ते स्थाननिर्देशपूर्वकं 'गन्धर्वं' इति लिखित्वा 'वृन्दोज्ज्वलौ' इत्यत्र '°वृन्दौ स्थितौ' इति पाठ कृत ।

मुहूर्त्तमात्र सममेव सङ्गर
तयोरभूद् राघवरक्षसोरिव ।
ततो रघूजीनृपतिप्रतापत-
स्तुरुष्कक शुष्कमुखो व्यपासरत् ।।१४८।।

विद्राव्य द्विषतां बलानि सबलान्येष प्रभु स्वैर्बलै-
रन्वीतो यवनाधिराजनगरोपान्तस्थतोयाशये ।
शस्त्र शात्रवगात्रबद्धरुधिरालिप्त परिक्षालयन्
क्षात्रो धर्म इव व्यराजततरा मूर्त्तो धरित्रीतले ।।१४९।।

आनम्रोन्नमनादनम्रनमनादाताम्रनेत्रद्वया-
दस्मात् प्राप्य निकारमीदृशमसौ म्लेच्छाधिप. सानुग ।
रक्षोराज इवार्जुनाद् बहुभुजान् मैत्रीमनेनातनोत्
सार्द्ध सत्प्रतिपत्तिरेव हि सतां सम्पत्तिमूल मतम् ।।१५०।।

डिल्लीशप्रणतेन तेन कृतिना मैत्री विधाय प्रभु-
र्नि शङ्क सुभुजो बुभोज वसुधामर्थैर्यमोज श्रितान् ।
सोऽपि प्राप्य तमुत्तमं प्रियहित नि शङ्कचित्तोऽभवन्
मैत्री योग्यजने हि कल्पलतिका सद्य फल यच्छति ।।१५१।।

एवमादीन्यनेकानि शृण्वता कर्णरसायनानि विविधरसायनानि रसायनानि विचित्राणि पवित्राणि चरित्राणि समातन्वानो मन्वानो निगमगणगदितानि विदितानि सञ्चिन्वानो जितहिममहांसि यशासि धुन्वानो वैरिजनमनासि निरातङ्कं कुशङ्कमनन्यशासनमनुबद्धशासवमातमजितमवनिमण्डल पाकशासनसमानशासन· सुचिरं शशास ।।२३।।

'त्यमुक्तावलेन विमत'' प्रधनव्रजेषु विदुषा स्वीकृत्य वाच सतां
युक्त दण्डचमिरापति कवि वानीते खले
लेखग्राममतोऽप्यवाभ्युदयभू पथ्य नितान्त कुले ॥
कव्युपश्लोकचक्रम्।

बीज धर्ममहीरुहस्य कृतिनामानन्दसन्दोहभू–
र्वीरश्रीसुदृश स्वयवरपतिर्गौरीपतिप्रीतिकृत् ।
सौन्दर्यस्य निकेतन निरुपधि स्थान सता सम्पदा
केनाय कविना विनाऽऽदिकविना वर्ण्येत रामोपम ॥१५२॥

चत्वारोऽपि सुता स्फुरद्गुणयुता विद्वन्नता सम्मता
राकाशारदचन्द्रपारदसुधाकारा यशोराशय ।
स्वादुस्वच्छसुशीतलाधिकजला वाप्यश्च तस्य प्रभो–
र्विद्वद्भ्य प्रतिपादयन्ति हृदयं ब्रह्मेव साधूक्तय' ॥१५३॥

विधाय धर्मस्थितिमत्र सुस्थिरा
प्रपाल्य भूमि सुचिरं शुचिव्रत' ।
विस्तार्य कीर्त्तिं रघुराज उच्चकै–
रनामय धाम जगाम रामवत् ॥१५४॥

अम्भोधि परिपूरयन्ति परित स्वाम्भोभिरम्भोधरा
ज्वालामालिनमग्निमुज्ज्वलयति ज्योति. सहस्रद्युते ।
आतेने रघुराज एष सुकृतो द्वीन्द्रां द्विचन्द्रा दिव
तन्मन्ये परिपूर्णपूरणविधिव्यग्रो विधिर्वर्तते ॥१५५॥

१. क. इत आरभ्य 'कव्युपश्लोकचक्रम्' यावत् उपरि पत्रान्ते लिपिकारेण अस्फुटमिव लिखितम्, यत् पठितु शक्य तदेवात्र निर्दिष्टम् ।

तिष्ठेद् यदि क्षितितले रघुराजनामा
कल्पद्रुमो द्विजनुषामदरिद्रता स्यात् ।
इत्याकुलो बत कृपाविमुखो विधाता
तं नीतवांस्त्रिदशलोकविभूषणाय ॥१५६॥

तमन्वगच्छत् सकवारबायी पति सतीना धुरि कीर्तनीया ।
अन्तर्गतप्रेमसुवर्णशुद्धेरग्निप्रवेशो हि परं निदानम् ॥१५७॥

सख्या इवास्याः सुहृद सपत्न्या पत्युर्नियोगेन च पश्चिमेन ।
भागीरथी तिष्ठति पुत्रवीक्षा भागीरथीवात्र पवित्रवृत्ति ॥

इन्द्रार्द्धासनमध्युवास सुकृतावासो रघूजीनृपो
वाङ्ग साङ्गदमस्य चाङ्गदभृता सङ्घट्टयन् बाहुना ।
जानूजीजननी जयन्तजननीभोग्यस्रजा भागभाक्
जाता भाग्यवता हि भाग्यमहिमा सर्वत्र सर्वाधिक ॥१५८॥

सकलनगरमण्डलानुराग–
प्रगुणगुणस्फुटजागरूकशोभम् ।
व्यधित सुकृतधामजानराजं
प्रकृतिगण प्रवणं पतिं पृथिव्या ॥१६०॥

वयोज्येष्ठः प्रेष्ठ सकलजगता श्रेष्ठमहिमा
हिमाद्रिर्नैष्कम्प्यात् [?] सहजसहनत्वेन वसुधा ।
सुधाभानु कान्त्या प्रकटमहसा वासरपति
प्रति पृथ्व्या जानूनृपतिरभवद् भ्रात्रनुमत. ॥१६१॥

दीपात् प्रदीप इव दीप्तिमतो रघोजी-
भूपात् स भूप उदभूदिति युक्तमस्मिन् ।
राजन्ति यद्गुणगणा: प्रगुणास्तदीया:
कार्ये हि कारणगुणा गुणमारभन्ते ॥१६२॥

प्रतिभूपतिमौलिरत्नराजि-
द्युतिनीराजितपादपद्मपीठ ।
शिवराज इवातिराजमानो
रघुराजस्य सुतो विराजतेऽसौ ॥१६३॥

चाणक्यकामन्दकमुख्यनीतिशास्त्रेषु शस्त्रेषु च लब्धपार ।
ससारसार सुयश.प्रसार' प्रसारयत्येष गुणानुदार ॥१६४॥

प्रकृतिरञ्जनत सुकृतिस्थिति-
व्यवहृतिप्रतिपत्तिवलन्मति ।
व्यधित राजपदं प्रकटार्थक
पृथुरिव प्रथित पृथिवीपति ॥१६५॥

प्रपाल्यमाना अमुना महात्मना
प्रजा: प्रजा स्वा इव धर्म्मवर्त्मना ।
अपेक्षितानामपि धर्मतन्मना[?]
सुख प्रजानामधिकं न मन्वते ॥१६६॥

दत्वा चन्द्रपुरं पुरन्दरवरश्रीको विनीतात्मने
श्रीमूधाजिसमाह्वयाय नगर बिम्बाजिनाम्ने तत. ।
भ्रात्रे रत्नपुरञ्च नागनगरे विश्वप्रकाशो स्वयं
तिष्ठन् भानुरिव प्रकाशयति स श्रीजानुराजो धराम् ॥१६७॥

श्रीसाबाजीनाम्ने निजानुजाय प्रसन्नगुणधाम्ने ।
प्रीतः प्रायच्छदसौ तद्योग्यं देशमुपभोग्यम् ॥१६८॥

सौभ्रात्रशुद्धहृदया विनयान्वितास्ते
तं भ्रातरः समुदिता मुदिता भजन्ति ।
श्रीरामचन्द्रसदृशं भरतादितुल्या
भीमार्जुनादिसदृशाश्च युधिष्ठिराभम् ॥१६९॥

सपदि शमयता विवादचर्चा
नियमयता च विमार्गगान् स्वदण्डैः ।
विजहति रघुराजविप्रयोगं
पितृवदनेन प्रजाः प्रपाल्यमानाः ॥१७०॥

सर्वतो विजयमिच्छतः सदा केवलं निजसुतात् पराजयम् ।
सिद्धमस्ति रघुभूपतेर्मनश्चिन्तितं यदयमीदृगेधते[1] ॥१७१॥

पञ्चद्राविडपञ्चगौडकुलजब्रह्मिष्ठविप्रव्रजान्
वृत्त्या साधु कृतार्थयन्ननुदिनं धृत्या महत्याऽधिकः ।
अक्षामप्रतिपक्षपक्षतिमिरप्रक्षोददक्षोदयो
राजा राजति राजराजवदयं विभ्राजमानः श्रिया ॥१७२॥

स जयति बृहदंसो भोसलावंशहंसो
बुधसरसिजहंसो वैरिकंसस्य कृष्णः ।
कलयति सततं सा कीर्तिमस्य प्रशंसा–
मतिवलितवतंसा हन्त हंसासनाऽपि ॥१७३॥

---

१. क. एतत्पूर्वमस्मिन् स्थाने '॰मीदृशोऽभवत्' इति लिखित्वा तदुपरि बिन्दून् दत्त्वा च लिपिकारेणाग्रे शुद्धं पाठान्तरं दत्तम् ।

वेदान्तसिद्धान्तरहस्यवेत्ता द्विषां विभेत्ता विदुषां प्रशंस्य· ।
स [1]सीरकेतोस्तुलनामुपेतो न कस्य चेतोहरतां प्रयाति ॥१७४॥
अवनीमवतीह जानराजे विदुषा नाभवदग्रहारपीडा ।
अभवद् भृशमग्रहारपीडा कुचकुम्भेषु कुरङ्गलोचनानाम् ॥
क. [2]श्रीमान् जानराज क इह रणकृतामग्रणीर्जानराज·
को धीमान् जानराज क उचितरचनाचुञ्चुरो जानराजः ।
को दाता जानराज प्रवरकविगिरा कः स्तुतो जानराज·
प्रश्नानामेक एव प्रतिवचनमसौ मानवज्जानराज ॥१७६॥
पुण्यश्लोकोऽजनि कृतयुगे वीरसेनस्य पुत्र–
स्त्रेताया श्रीरघुपतिरभूद् द्वापरे धर्मराज ।
श्रीजानूजीनृपतिरधुना तादृशस्तिष्यकाकाले [?] [3] ॥१७७॥
[4]उल्लाघिनी तनुरखण्डतम प्रभुत्व
सम्पत्तिरप्रतिहता नवयौवनञ्च ।
एकैकमेव मदकारणमत्र तानि सर्वाणि तस्य विनयाय ·[5] ।
[6]यन्मार्गतो [?] परमचतुरो रत्नगर्भा च पृथ्वी·· · ॥१७९॥
पौलोमीव पुरन्दरस्य कमलाकान्तस्य लक्ष्मीरिव
श्रीशम्भोर्गिरिनन्दिनीव वचसा देवीव लोकेशितु ।
वैदेहीव रघूत्तमस्य रमणीसीमन्तमुक्तामणि·
सद्वंशप्रभवा विभाति दरियाबायीति तस्य प्रिया ॥१८०॥

---

१. सीरकेतोर्जनकस्येत्यर्थ । २. अत्र 'दाता' इत्यपि लिखितम् । ३. चतुर्थपादो लिपिकारेण न लिखित । ४ रोगरहितेत्यर्थ । ५. अत्र किमपि लिखित वर्तते, किन्तु पत्रस्य प्राचीनतया गलितत्वेन पठितु न शक्यते । ६. मन्दाक्रान्तानिबद्ध पद्यमिदमत्रैतावदेव लिखितम् ।

पातिव्रत्यमरुन्धतीव दधती लक्ष्मीरिव श्रीमती
दानं कल्पलतेव या वितनुते गौरीव गौरी गुणै. ।
या मातेव विलोकते बत दयादृष्टया प्रजावत् प्रजा·
श्रद्धाभक्तिमती श्रुतिस्मृतिमते विप्रे गुरौ चानता ॥१८१॥

परिप्रष्टु प्राय: प्रियतमकथाकर्णनकलां
समाख्यातु चास्मै स्वयमपि तदोलोकनसुखम् ।
श्रुतिं तस्याश्चक्षु श्रयति परमन्यत्र दयितात्
समाक्रान्ते पत्या भवतु कुपित चेतसि कुत ॥१८२॥

परिग्रहबहुत्वेऽपि सैवेका तस्य मोदिनी ।
ताराकुमुदिनीयोगेऽपीन्दोरिव विभावरी ॥१८३॥

मन्दमरुदान्दोलितदरदलितनीलनलिनदलदामश्य।मसुन्दराभ्यां कुपितकुसुमकेतुकोदण्डकुटिलविल्लि[?]वल्लिवेल्लिताभ्या तरलतरतारकाभ्यां लोचनाभ्यामनुगृहीतो नवसरसशिरीषकुसुमशिखरपरिपेलवाभ्या चन्द्रचुम्बितचन्द्रमणिजलोद्धारशिशिराभ्या विलासवलिताभ्या भुजलताभ्यामालिङ्गितो द्रवदमृतरसकूपादिव समुत्थितेन परिणतद्राक्षापरिपाकक्षालितेनेव वचनेन सुखितश्रुतिसुषिरो रसरभसेन दयिताभिस्समं गमयति समयं कदाचित् वेदान्तसिद्धान्तशुद्धान्त.करणानामध्यात्मतत्त्वविचारचातुर्येण पूर्यमाणचित्तावृत्ति:, कदाचिदुद्ग्राहग्रहिलानां नैयायिकवैशेषिकमीमांसकशाब्दिकशास्त्रिणामन्योन्यापेक्षिणा वादचर्य्यया निर्णा[र्णी]यमानं सस्मितवदन. शृणोति शास्त्रार्थसारनिर्यासम्, कदाचित् संस्कृतप्राकृतनिरवद्यगद्यचमत्कृतकाव्यकलाकलापकौशलाकलनेन कलयति कौतुकम्, कदाचित् यान्त्रिकमान्त्रिकतान्त्रिकशैववैष्णवपाशुपतादिभ्य: सुमनोभ्य: स्व-

मनोविनोदनिदान सारङ्ग इव सारमिव सारमादत्ते । क्वचन गीतार्थानामिवानवगीतार्थाना नवगीतानां स्वयनिर्म्मितानां वैणिक-मौरजिकगायनविविच्यमानामसमानामाकर्णयति कर्णसुभगां तान-मानरागविभागसम्पदम्, क्वचन सुशिक्षितामपि शस्त्रविद्यामायु-धागारे पुनः सस्कारेण चमत्करोति । कदाचिद् विशालासु वाजिशालासु शालिहोत्रशास्त्रकौशलशालिभिस्सम परीक्षते वीक्षते च नानाजनपदात् उपढौकितान् महापौरुषान् वाहान् । एवमस्य सुखेन दिनानि यान्ति ॥२४॥ एकदा—

कृतस्नानः स्थानस्थितसकलसानन्दहृदय—
द्विजानामाशीभिर्व्विहितभविक साधुविनतः ।
शिव साम्बं सम्पूजयितुमनुयातः परिजनै
सुवेश. श्रीजानूनृपतिरुपयातोऽर्च्चनगृहम् ॥१८३॥

तत्र—

निरवद्यभक्तिसुधासमुद्यतसेकशक्तिविकस्वर—
प्रतिपत्तिनूतनमूलपूजितचित्तवासिमहेश्वर ।
प्रतिमापरिष्ठितसुप्रतिष्ठितमिष्टदेवमनश्वरं
परिपूज्य सन्नमति प्रसन्नमतीव तं स महेश्वर. ॥१८४॥

अथ तद्भवनद्वारसमीपे—

सम्पूज्याप्तमवाप्तमोदकचयं प्राप्तं प्रसादाद् गुण—
व्याप्तं कुञ्जरमञ्जनाचलरुचिं व्यक्तैकदन्तद्युतिम् ।
गोदान विधिवद् विधाय नियत सानन्दचित्तश्शनै—
र्वासागारमुदारमाविशदसावासादिताशीःशत ॥१८५॥

तत. सभ्य वेश सुकृतशतलभ्यं दधदिमा
प्रजा द्रक्ष्यन् साक्षात्प्रतिपदमवेक्षापरतया ।
समध्यास्ते [१]सम्भाषणमधुरसम्भाषणमुखो
निरालस्यो धर्म्मावतर इव धर्म्मासनमसौ ॥१८६॥

यः किल–

सङ्क्रामक्रामदामत्तकविमतगजग्रामणीग्रामकुम्भ–
प्रोज्जाग्रन्मण्डलाग्रः पदयुगलनमन्मण्डलाग्रप्रवीर ।
श्रीमान् दाताऽवदाताशय उदितयशोराशिविद्योतिताशः
सेनासाहेबसूबापदमनुभवति स्वाप्तसेनासमूहः ॥१८७॥

अथ–

क्वचित्कान्तवेदान्तसिद्धान्तसिद्धा–
तिशुद्धान्तराणा तति. सुप्रसिद्धा[२] ।
क्वचित्तादृशग्रन्थपाठप्रवीणा गणाः
श्रोत्रियब्राह्मणानां धुरीणा ॥१८८॥

क्वचिच्चण्डपाषण्डवेतण्डगण्ड–
स्थलीखण्डनोद्दण्डकक्षेषु षण्ड. ।
गिरामक्षपक्षः[ ? ]पादस्फुरामुद्धुरार्थ–
स्फुटीकारदक्ष सुधीराजसार्थ ॥१८९॥

---

१. क. 'रम्भाधर' इति पाठोऽत्र दृश्यते । २. क. अत्र सिद्धाः' इति विसर्गो लिखित स नात्र युज्यते ।

क्वचित्कुण्डलीभावभृत्कुण्डलीश.
स्फुरत्फक्किकामण्डलीशोधिधीश ।
कृतिव्याकृतिव्याकृतिव्याहृतार्थ
सदव्याजभव्याकृति शाब्दिकौघ कृतार्थ.[1] ॥१६०॥

क्वचित्सोपदेशातिदेशार्थशाली
भृशालीनशाली नवादीनपाली ।
कृतानेकयागक्रियासविभाग
सुमीमासक. प्रौढशास्त्रानुराग. ॥१६१॥

समीक्षापरीक्षासुदक्षातिकक्षा
निजाक्षामपक्षा विपक्षासुलक्षा ।
क्वचिद्योगशास्त्राभियोगप्रयोग–
प्रसन्नानुयोग सदर्थोपयोगः ॥१६२॥

क्वचित्सूर्यसिद्धान्ततत्त्वप्रसिद्धा
महाविज्ञदैवज्ञराजीषु सिद्धा ।
क्वचिद् दिव्यदिव्योपचारप्रचार–
प्रकारप्रसारः स्फुरन्वैद्यसार ॥१६३॥

क्वचिच्चापि साहित्यसौहित्यवन्तो
वहन्तो मुद तोषयन्त. सदन्तः ।
कवीनां व्रजा. सन्नवीनाध्वनीनां
नवीना गिरो भावयन्त प्रवीणाः ॥१६४॥

---

१. क. 'कृतार्थ' इत्यधिकः पाठ. ।

क्वचिद् गीतिनीतिप्रणीतिप्रतीता-
भिनीता विनीता[1] सुनीता विगीता ।
क्वचित् सिद्धमन्त्रा शिवाद्वैततन्त्रा
जन त्रायमाणा वितन्द्रा स्वतन्त्रा. ॥१६५॥
गजारोहणे वाजिराजाधिरोहे
प्रतिष्ठामधिष्ठास्नव शोभनोहे ।
समस्तास्त्रशस्त्रैकशिक्षासु शस्ताः
सदा युद्धजैत्रा भटा साधुहस्ता ॥१६६॥
प्रभोराश्रवा वर्द्धितस्वामिकार्था.
स्वदेश्या विदेश्यास्तुरुष्कास्तथार्या. ।
क्वचिल्लेखका देशभाषानिवेशा—
दतीव प्रतीता उदीता सुवेशा ॥१६७॥
यथायोग्यसत्कारसम्भारलम्भा-
दलम्भाविता भूभुजा त्यक्तदम्भाः ।
निविष्टाश्च यस्या यथास्थानमिष्टा
विशिष्टा दृढस्तम्भवत्यां[1] सुशिष्टा. ॥१६८॥
तमस्यां सभाया यशस्यानुभाव
समासीनमीशानसद्भक्तिभावम् ।
महाराजमेत सदस्यैः समेतं
द्विजान् मानयन्त गुणानां निकेतम् ॥

१. ''बल्या' इत्यपि पठितु शक्यते ।

प्रणम्य स्थिता॰ सम्पुटीकृत्य पाणी
चराः केचिदेतां गदन्ति स्म वाणीम् ॥१९९॥

भाऊनामनि दीप्तधामनि हरिप्रस्थैकजैत्रे कुरु–
क्षेत्रे भारतवद् विधाय समर प्राप्ते हरे पत्तनम् ।
नान्हाख्ये सहजानुरागवलिते तञ्चानुयातेऽनुजो
बाले माधवनाम्नि तस्य तनये राजाऽभवद् राघव ॥२००॥

तस्य च नवीनोदयं राज्यमदीनोत्साहो विततनयो निजामन-मुलूक[1]तनयोऽवरुरुत्सति विधित्सति च शुभसमये प्रयाणमिति । अनन्तरमेव श्रीमता राघवरायेण प्रेषितो दूतो गृहीतवर्णदूतो[2] द्वारि वर्तमानो दौवारिकावेदितेन मानोन्नतेन तेन सादरमाकारितो विनयादुपसृत्य प्रणिपत्य तत्रत्यवृत्तगर्भं सप्रणयसन्दर्भ पत्रमुपदर्शयति स्म । एतस्मिन्नवसरे रजिराज[?] इव राजमानो रघुराजतनयो मृगराजमानो जानराजः समरसीमनि यदर्थमुद्यतायुधो भवति स खलु विजयलक्ष्मीसङ्गमसुखमनुभवति नियतमिति नियतिप्रेरिताभ्यां ताभ्यां परस्परविरुद्धाभ्यां प्रारिप्सितयुद्धाभ्यां सुरासुराधिपा-भ्यामिव पुण्यग्रामौरङ्गाबादनगराधिपाभ्यामत्यादरेण प्रहितो हितो जन. परिजनसभाजनगुरुजनसमेतमेतमवनिपतिमतिशयितमति-मुपगम्य , रम्यतरपूर्वप्रीतिपरम्परापूर्वक निजं निजमर्थं समर्थयति स्म । अथ तयोरुभयोरुपरि समसमयोऽपि विहितबहुविधविनयोपा-

१ निजामुल्मुल्क' इति पारसीकशब्दस्य सस्कृतकरण प्रतीयते । २ 'वर्त्म-दूतो' इत्यपि पठितु शक्यते ।

यस्य राघवरायस्य साहायकमेव स्वीकृत्य भृत्यमात्मन सेनासन्नहनाय सिंहसन्नहनः सै नरसिंह समादिशति स्म, प्रविशति स्म च निज-मन्त.पुरम् । अथ विशालाभ्यो वाजिशालाभ्यो वल्लभपाला भूमि-पालाज्ञया पर्याणितानपर्याप्तानपर्यासित इति पर्यायानश्ववर्यानिन-श्वरमर्यादानस्थापयन् द्वारदेशे ॥२५॥

वेगे वर्ष्मणि पौरुषाधिकतया मातु पितु शुद्धतां
शसन्त सततं वलन्निजवपु पुष्ट्या पुन स्वामिन ।
ते कम्बोजवनायुसिन्धुजवनाराढादिदेशोद्भवा
भव्यावर्त्तविवर्त्तवृत्ततनवोऽभासन्त भाण्डोज्ज्वलाः ॥२०१॥

केचित् खञ्जनगञ्जनद्युतिभृतश्चक्षुर्म्मनोरञ्जनं
कुर्वन्त्यञ्जनगर्वगञ्जनकृत स्वीयाङ्गदीप्त्या परे ।
एके नूतनसूरसूतसदृशाच्छायाः परे पाटला–
काराः[१] धूमलकान्तय कतिपये सद्धूसराश्चेतरे ॥२०२॥

परे च शशभृच्छिलारुचिरपिच्छिलाङ्गत्विष.
समुच्छलितसुच्छविच्छुरितपुच्छविस्फारणै ।
समीरणसमुद्धुरा जितसमीरणप्रक्रमा
क्रमाद्भुतत[तु]रङ्गमा हृदि तु[त]रङ्गमातन्वत ॥२०३॥

भृशमुच्छलदच्छचामरच्छलतः स्वच्छविपुच्छगुच्छका. ।
दधतेऽतिरया हया मनोविजयादर्ज्जितमूर्ज्जितं यश. ॥२०४॥

---

१. "कारा." इत्यत्र विसर्गो नापेक्ष्यते ।

मन्दत्व मध्यभागे सह विमतजनैर्व्वक्षसि स्वामिसन्ध्या[?]
साद्‌र्धं वृद्धिं वहन्तो गतिषु मृगदृश साकमक्षाचलत्वम् ।
औन्नत्य सन्मनोभि· सममखिलवपुष्मत्युदग्रै पदाग्रै
कारुण्येनासमग्रैरवनिमिह हया किञ्चिदेव स्पृशन्ति ॥२०५॥

धुन्वन् मूर्द्धानमुद्‌ध्वर्वायतरुचिरसट पातकैस्तारकौघै-
र्मुक्तागुच्छच्छलेन च्छुरित इव कलावच्छिलापिच्छिलाङ्ग· ।
वाहोऽसौ राजवाहो यश इव विलिखन्नुत्पटङ्के[?]धरण्यां
द्रष्टु शक्यो न वक्तु सरसि[ज]रुहभूशिल्पसर्वस्वसीमा ॥

यस्मिन् धावत्यहह भजते पङ्गुभाव नभस्वान्
दुर्वाच स्वान्वदति कुपित· शश्वदश्वान् विवस्वान् ।
उच्चैरुच्चै श्रवसममराधीश्वरो धि करोति
व्रीडोद्रेकादिव न गरुडश्चञ्चुमुच्चै करोति ॥२०७॥

रथमुपरि वहन्त सप्तय सप्तसप्ते
कथमपि वियदेवाश्वीनयन्ति श्रमेण ।
गदितुमिह विलम्बश्चेदसङ्गोऽयमिच्छे[त्]
त्रिभुवनमपि गत्वा सद्य एवोपगच्छेत् ॥२०८॥

बिभ्राण· पूर्णकुम्भद्वयमिव निलयं मङ्गलानां स्वकुम्भ-
द्वन्द्वं निःस्यन्दिदानद्रवसरसकर· सारभृङ्गारधारः ।
भृङ्गैरारब्धभोगावलिरिव शरणै[?]वाप्तदानप्रसङ्गै-
रिष्टोऽभूत्तत्तुरुच्चै प्रथममुपगतो दन्तिराडेकदन्त ॥२०९॥

एकत्र प्रविलम्बिभानुरपरत्रोदित्वरानुष्णभा
मूर्तो विन्ध्य इवोन्नतिं समधिका प्राप्त· स्फुरद्गैरिकः ।
संघटा[ट्टा?]परिवारित. परिलसत्सिन्दूरपूरद्युति-
र्दन्तीन्द्रप्रकरः करम्भितजलै सिक्तां करोति स्म गाम् ॥२१०॥

(अञ्चच्छृङ्गारलेखायुधपरिवलिताचारुचञ्चद्वलाकाकारोद-
ञ्चत्पताक[1])

लीलोदस्ताग्रहस्तान्तरकुह[र]गतस्वच्छनक्षत्रमुक्ता-
गुच्छ स्वच्छन्दमम्भ कणगणमिषतो दिक्षु मङ्क्षु क्षिपन्तः ।
उत्तालै. कर्णतालैस्तुरगखुररजोराजिदोष हरन्त-
श्छाया मित्रस्य दूराद् वियत इव महाबृंहिता भान्ति नागा. ॥
वसुधाचलमण्डपोपमा चरणस्तम्भचतुष्टयीसमा ।
गजता जनतामनोरमा नृपतेर्द्वारि रमा घनागमाः ॥२१२॥

स्फुरच्चित्रस्तोमस्फुटकुथपरिस्तोमकलने
जयश्रीहस्ताम्भोरुहवलनहस्तारुणिमनि ।
प्रतापव्यामिश्रा प्रकटमिव कीर्तिं प्रथयति
द्विपे तस्मिन् हेमाचितरदमिषाद्रज्यति जन· ॥२१३॥
यस्मै जाननृपप्रियाय महते प्रत्यर्थिपृथ्वीपति–
प्रेयस्यः परिकम्पिताः परिभवादुत्कोचमुच्चैर्ददु. ।
नूनं सालसयानमुन्नतिवलद्वक्षोजकुम्भश्रियं
रम्भास्तम्भसमस्य चोरुयुगलस्याभां स्वरक्षापराः ॥२१४॥

---

१. क लिपिकारेणैवमेव पद्यमिदमसम्पूर्णं लिखितम् ।

चञ्चच्चक्रपरिभ्रमक्रमदलद्भूचक्रधूलीभरै-
रस्पृष्टाः पवनातिशायिजवना हेमावनद्धा घनाः ।
भग्नद्वेषिमनोरथा विदधति क्रीडारथाः कौतुकं
केषां[1] केकीवद्ध[2]निमध्वनि स्म कलयन्त्युत्कण्ठमुत्कण्ठते [?]॥

बिभ्रति स्म सुधुरां विजयश्रीसङ्गता हरिपरिक्रमरम्याः ।
उच्चभारतबलाबलदक्षा[3] नन्दिघोषमुखरा रथवंशाः ॥२१६॥

उदग्रग्रीवाग्राः पृथुलचपलौ [लो?] ष्ठा करभका
सकृन्मूत्रा दीर्घावयवगहना भारवहना ।
स्वपृ[ष्ठे]द्राघिष्ठे प्रकटपटवेश्मादिपटली
वहन्तो भूयांसो[4] रघुनृपसुतद्वारसविधे ॥२१७॥

बुध इव बहुलोहदार्ढ्यधारिसुघटितचक्रयुग. प्रभातवच्च ।
सुजन इव वलद्वृषावलम्ब शकटगणः प्रकटं विराजते स्म ॥

सुभटपरिजनानां भागशो वेतनार्थं
सततवितरणार्थं वाम्यनोवेसरोष्ट्रे ।
न्यधित विविधकुप्याकुप्यवित्ता तथोच्चै-
र्नगर इव यथाऽध्वन्यप्यसौ सौख्यमेति ॥२१९॥

---

१. 'रेखा' इत्यपि पठितु शक्यते । २. 'केकीबद्ध' इति सर्वथा चिन्तनीयोऽयं पाठः । ३. '°बलाबल°' इतीद '°रणावन' इत्यपि शक्यते पठितुम् । ४. लिपिकारेणात्र 'राजन्ते' इत्यधिक पाठो दत्त. ।

अथ–

पाश्चात्त्या. साभिजात्या समरविजयिनो मानिनो दाक्षिणात्या
पौरस्त्या अप्युदीच्या समुचितविनयज्ञानभक्तिप्रहर्षा ।
सन्नद्धा बद्धगोधाद्युपकरणसमुन्नद्धगोधा. सुयोधा
वाहानारुह्य राजागमनमहमुदेक्षन्तु ते द्वारदेशे ॥२२०॥

अथ श्रीजानूजीनृपतिरतिमात्रोन्नतमनो–
निवेश. प्रस्थानोचितसुभगवेशोज्ज्वलवपु. ।
धनौघै सम्भाव्य श्रुतनिगमसम्भाविततमान्
द्विजान्यात्रालग्ने गुणमहति प्रातिष्ठत गृहात् ॥२२१॥

स्फुरदुरुतरवारिधारया द्राग्
विकलयितु परराजहंसराजी ।
करिगिरिमधिरोहति स्म राज-
न्मणिवलयद्युतिविद्युता धनश्री. ॥२२२॥

अथो निदिष्टा प्रभुणा निविष्टा
शिष्टास्तदिष्टा वलमानदिष्टा. ।
हयांश्च नागाश्च रथांश्च [1]सज्जा-
नारूढवन्त. प्रणिपातपूर्वम् ॥२२३॥

कृतसुरगुरुपूजे श्रीरघूजीतनूजे
व्रजति विजयहेतो स्वीयचेतोऽनुरूपम् ।
पटहपटलभेरीभा[ता]रभाङ्कारभारै-
र्भरितमखिलबिम्ब शब्दतन्मात्रमासीत् ॥२२४॥

---

१. 'सज्जान्' इत्यस्मिन् स्थाने 'तास्तान्' इति पाठोऽपि पत्रप्रान्ते निर्दिष्टो लिपिकारेण ।

नागनगरयोषा गम्भीरघोषाहूता इव पृथिवीपुरुहूतालोकनाय निजनिजसौधशिखरमधिरूढा प्रकटशुक्तिसम्पुटस्फुटनिस्सृतमुक्तिकानिकरैरिव विमलकमलकोषकोमलकरकोरककलितलम्बितलाजप्रकरैरेनमनवरतमवकिरन्ति स्म, तरलतरतारहारजलधारबहलकुचभारकुम्भयुगलमाननमुकुरम्ब[ ? ]मक्षिमयमीनमदीनस्मितलवनवकुसुममुज्ज्वलकरतलकिसलयमङ्गमेव मङ्गलतामुपनयन्ति स्म ॥२६॥

प्रपठति विश्रम स्फुटार्थप्रकटपदा विरूदावलीमुदाराम् ।
चतुरगतुरगस्थवृन्दि पिकततिराम्रगतेव मन्मथस्य ॥२२५॥

स बहुनयनलाभश्चञ्चदुच्चामरश्री-
र्वलितललितवज्रोद्भासिहस्तारविन्द. ।
गुरुमतपरिपुष्टश्री सुनासीर उच्चै-
र्गजपतिमधिरूढो राजते जानराज ॥२२६॥

व्यलसदमलकान्तिस्तस्य वीरस्य हीर.
शिरसि निहित उद्यन्मुक्तिकाभि समेत. ।
विधु"'तूमिवे तः[ ? ] सैन्यधूलीकदम्बै
पिहिततरणिबिम्बे मार्गसन्दर्शनाय ॥२२७॥

कुवलयदलदामश्यामलस्निग्धमूर्ते-
रुरसि रुचिरहारः श्लक्ष्णसत्कञ्चुकस्य ।
उपरिगत इवाभादिन्द्रनीलाश्मपात्रे
प्रतिफलित इवाम्भ पूरिते तारकौघः ॥२२८॥

भेरीभाङ्कृतिभारवारणघटावृन्दारवोन्मूर्च्छित:[1]
प्रस्थाने रघुनन्दनस्य समभूदश्वौघहेषाभर. ।
मन्येऽमानिव विस्तृतेऽपि सकले ब्रह्माण्डभाण्डोदरे
व्याघुट्य प्रसभेन य प्रतिरवव्याजाच्चिरं भ्रान्तवान् ॥२२८॥

धावद्वाजीन्द्रराजीखरखुरपटलाघातसञ्जातबाधां
भेरीभाङ्कारभारप्रचलदुदलवैरम्बुधि. सिञ्चति क्ष्माम् ।
दिग्बालावैजयन्तीवसनतरलनैर्वीजयन्तीव धूली–
धारा धावत्युदारा दिवमिव किमपि प्रष्टुकामाऽऽश्विनेयौ ॥

श्रीजानूजीप्रयाणे हयखुरजरजोयोगदोषादशेषा
दिग्योधा स्नान्ति वैरिक्षितिपतितरुणीनेत्रनीरापगासु ।
सङ्गम्याथ प्रतापै स्फुरदुरुरुचिभिस्ता. सगर्भा सनम्भा [?]
प्राची प्राय· प्रसूते वलदरुणाकरं बालसूर्यं पुरस्तात् ॥२३०॥

चमूचरचरणधूलिनिचये प्रसरति–
पङ्कीभावविशङ्कया जलनिधौ शङ्केऽरिपङ्केरुहा–
क्षीणामक्षिपुटीकुटीमुपगते वक्ष:स्थलं वाडव: ।
तासामेव समागत· स्थलविनाभावाद् विलासान्विता
लक्ष्मीस्तु स्वयमेव नागनगराधीश समाशिश्रयत् ॥२३१॥

---

१. '°दुर्वद्धित:' इति पाठान्तर पत्रप्रान्ते दत्तम् । २. अत्र 'राघव' इति लिखित्वा लिपिकारेण तदुपरि बिन्दव कृता. ।

स्वैरं स्वैर सरससरसीसारसीकूजितानि
श्रावं श्रावं गिरिवननदीभाग्यसौभाग्ययोगात्[१]।
दर्श दर्श निजकभुजया रक्षितान् भूमिभागान्
मार्गे हृष्ट सुचिरमभवद् भोसलावंशहस ॥२३॥

अथ परदेशप्रदेशेष्वपि निजदेशप्रदेशेस्विवाक्लेशेनानन्यसामान्यवदान्यमान्यसैन्यसमेत इतश्चेतश्चागच्छता नानाविधोपायनानि प्रयच्छता चेतस्वता ग्राम्यनागरजनसमूहेन मानितो विमलसारस्वतसरस्वता यथोचितं परितोषितेन पण्डितजनेन च तत्र तत्राभिनन्दितो राघवभुजाङ्गनापालिता भरतलक्ष्मणशत्रुघ्नबललालितां पुण्यग्रामनाममात्रभिन्नामयोध्या पुरमासादितवान् । तत्र च तदागमनमुदितेन समुदितेन तेन राज्ञा सुदूर प्रत्युद्गम्य कार्यगौरववशादसाधारणेन सत्कारेण सत्कृत्य तत्कालोचितं समुदाचारञ्च विधाय तद्योग्याया भोग्याखिलवस्तुभारिकायामुपकारिकायामधिगम्य निजभवन प्रत्यगामि ॥२७॥

समुचितसमयेऽथ जानराज सह हितमित्रगणेन राघवस्य ।
समितिमुपगतो विशुद्धबोधैः समुपहितां सचिवैस्तथा सुयोधै. ॥
यथोचित राघवभूमिपेन सम्भावित श्रीरघुराजसूनुः ।
अस्योपविष्ट सविधे सदक्षो दक्षो भुजादण्ड इवाधिराज. ॥

कथानां प्रस्तावे सति वितायमाने ततानेकमनोरथाना सिद्धिमवाप्तुकामो राघवो यवनाधिराजस्याभिषिसेचयिषामावेद्य स्वस्य च तत्प्रतिरुरुत्सासमुत्साहमकथयत् ॥२८॥

---

१. इत पूर्वं 'कारी' इति लिखित्वा बिन्दव कृता ।

रघुनरपतिपुत्रो हेतुदृष्टान्तपक्षै-
स्तदभिमुखयियासा[मस्य[1]] तत्र काले न्यषेधीत् ।
अथ निजहृदि बुद्ध्वा तस्य निर्बन्धमुच्चै-
रनुमतिमिव कर्त्तुं मौनमालम्बते स्म ॥२३५॥
अथौरङ्गाबादं प्रति बहुबलं राघवबल
प्रतस्थे जानूजीधरणिपतिसैन्यद्विगुणितम् ।
वितन्वद् धूलीनां ततिभिरवनिं व्योम्नि करिणां
घटाभि प्रौढाभि प्रकटमवनौ चापि गगनम् ॥२३६॥

महासेनानुकारिण[2] स्वयं यावदस्य महासेना श्रति[?] तावद्बहिरिता यवनस्यापि वाहिनी ॥२६॥

स्फुटास्फोटसर्पत्सटाकोटसद्घोटकालीनटट्टापपाली-
समाघातघाटातटामोटशालीनविस्फोटकाली तीव्र-
स्फुटास्फोटशाली ।
स्फुटारक्तचञ्चत्पताकापटाकारतो नारतो दारतो दच्छटातो
दशादर्शनाय व्याददातीव जिह्वामसौ विह्वलोद्यानपाली[?] ॥
स्फुरद्भेरिभाङ्कारभारैर्महाभैरवैर्भैरवीयै रवौघै-
रिवाभीरुभूभारभूरीभरेभैश्च सम्पूर्यतेऽलं महा-
जानुभाण्डं प्रयाणे निजामन्मुलूकान्वयालङ्कृते.
श्मश्रुलप्रायदीप्रायसप्रासशक्त्युल्लसत्पाणि ॥२३८॥

---

१. उपरि बिन्दुप्रदानेन निराकृतमेतत् पदम् । २. "कारिण." इति कथञ्चि-दप्रयत्नेन पठितु शक्यते ।

( सोत्प्रासहासप्रवीरावलीकस्य . २१ सन्तन्वतोऽकाण्डकाण्ड-प्रकाण्ड)[१] परशुरामावतारस्य नान्हाजीकस्यानुजन्मत पुण्यग्रामपुर प्रति प्रयान्तमेन बहुलसेनं विनिवारयितु प्रयतमानोऽपि भाग्य इव महाभागे जानराजे कुतोऽपि कारणान्मध्यस्थभावमिवोपगते प्रावृषेण्य-वाहिनीवारिपूरमिव न शशाक ।।३०।।

कृतकरिणि विदुर्गे दुर्गमाग्नेयबाण—
प्रकरविहितवृष्टेर्वेष्टमाने यथेष्टम् ।
यवनबलसमूहे व्यूहमाने दुरूहे
विफलसकलयत्ना सैनिकास्तस्य जाताः ।।२३९।।

यदि कोऽपि कोपवशत शताग्रणी
सुभट· समेति परमेण तेजसा ।
बलदग्निबाणबलमानगोलक—
द्रुतदोलमानहृदयोऽस्फुटत्तदा ।।२४०।।

राघवबलनिरुद्धवीवधासारप्रसारोऽपि यथाकथञ्चिन्निजसैन्य कर्त्तयन् कदाचिद् गव्यूतिमात्र कदाचित् सार्द्धगव्यूतिपरिमित पन्थान लङ्घयन्नतिचिरसमयेन डिल्लीशामात्यवश्यो योजनमध्ये पुण्यग्रामस्य स्कन्धावारमवासयत् अकरोच्च. श्व. प्रभाते सकलरत्न-परिपूर्णं राघवनगर विलुण्ठ्य चिरप्ररूढस्य वैरस्य निर्यातन करिष्यामीति । अत्रान्तरे भगवानपि मरीचिमाली मनसि जात-निर्व्वेद इव च···साचलं ··[२] चुम्बिबिम्ब सजज्ञे ।।३१।।

---

१ क. एवमेव लिखित लिपिकारेण । २. अत्राक्षराणि न पठितु शक्यन्ते ।

यस्यामेति महोमहोदयमसौ तस्यामिवास्यामसा--
वाशायामनुरागमाकलयते तुल्यं प्रतीच्यामपि ।
भास्वानित्यसमञ्जसं कलयितुं नो पारयन्ती सती
शङ्के सम्प्रति मीलयत्यतितमा पक्ष्मेक्षणं पद्मिनी ॥२४१॥

अथ—

कान्तासु स्वभिसारसाहसरसस्वान्तासु सिद्धाञ्जनं
मित्र दुर्जनचेतस कमलिनीदुर्दैवलेखामसो ।
मित्रान्यप्रतिवीक्षणाक्षमदृशा लीलान्धपट्टं दिशा
नेत्राणामपमृत्युरन्धतमसस्तोमो जिजृम्भे शनै ॥२४२॥

श्याम दुर्ज्जनचेतसोऽपि निबिड मुग्धोरुबन्धादपि [?]
श्रीदर्पादपि दृष्टिरोधि रसिकोन्मादि स्मरेषोरपि ।
विश्वव्यापि मधुद्विषोऽपि सुहृदां स्नेहादपीयत्तया
मुक्त साधु निहन्ति हन्त हरिता भेदप्रवाद तम ॥२४३॥

अनन्तरञ्च—

सन्ध्यानृत्यविधूतधूर्जटिजटाजूटान्तकूटान्तर--
स्वच्छन्दोच्छलदच्छदैवतनदीवार्बिन्दुधारा इव ।
आकीर्णा मदनस्य विश्वजयिनः प्रस्थानलाजा इवा--
भ्राजन्ताम्बरपट्टगा रजतजा वर्णा इवौतूव्रजा. [?] ॥२४४॥

माणिक्यं रविबिम्बमम्बरवणिग् विक्रीय रत्नाकरे
तारा राजतमुद्रिका इव समादत्ते तदर्घीकृता ।
एतासां कतिचित् प्रदाय कतिधैरेव ग्रहीता क्षणै--
रिन्दुं स्फाटिकरत्नभाण्डमुदयन्नीलाश्मलीलामृगम् ॥२४५॥

भानौ क्वापि गते तदीयकिरणश्रेणीव सन्ध्यारुणा
सम्प्राप्ताब्जमरन्दबिन्दुपटलाध्यासा विवासोत्सवा[१] ।
दीपाली वरगन्धतैलवलिता विष्वक्कृता कज्जल-
व्याजादुद्वमति प्रपीय परितो नैशं स्म रूढ तमः ॥२४६॥

नरपतिशिबिरप्रस[सा?]रिदीप-
द्युतिगलहस्तितशङ्कितोऽन्धकारः ।
[२]भ्रमति निरवलम्बनोऽतिदम्भा-
त्कुमुदवने विदलिष्यति प्रवेष्टुम् ॥२४७॥

अनन्तरमुदित समुदितमदनमालवकामिनीमृगमदवलित-कपोलफलककोमलद्युतिरमलमरकतरत्नप्रत्युप्तनिस्तप्तकनककुण्डल-माखण्डलदिगङ्गनाया गगनाङ्गणायामरिङ्गणाय पूर्वाचलशिखर-मारुरोह भगवानुदयरत्नमण्डलो हरिणाङ्क । क्रमेणोपगतराग द्विजराज समालोक्य सर्व्वे मुमुदिरे, कौतुकेन किमपि किमपि व्यतर्कयन् ॥३१॥

तथाहि—

मन्ये मन्दरमथ्यमानपयसो दुग्धोदधेः पिण्डितो
वातावर्तविशेषतो दिवि गतो हिण्डीरपिण्डो विधुः ।
अस्यान्त.पृषता गतास्तत इतस्तारास्त एव स्थिता
व्योमाङ्कः प्रतिबिम्बितंस्रवति च ज्योत्स्नारस सर्वत[?] ॥

१. '°ध्वान्ताविवासोत्सवा' इति सशोधनमपेक्ष्यते । २. इत. पूर्वं लिपिकारेणैव लिखितम्—(मधुकरपटलीमिषेण नून क्रमदलितेषु विवेश).

स्वकीयायामास्थानमण्डपिकायाञ्च चतुःशिखपञ्चशिख-दीपिकायामनिरस्ततिमिरसञ्चरेशङ्काया [ ? ] सञ्चितद्विगुणभूषण-मणिकिरणश्रेणिनिश्रेणिकायामासीने जानराजे राघवराजे च श्रीमत्या धीमत्या गोपिकाबायीदेव्या पुण्यग्रामादव्याजं प्रेषितो गृहीतवर्णदूतो[१] दूतो द्वारि वर्तमानो दौवारिकावेदितेन तेन पुरुहूतो-पमेन समाहूतो विनयादुपसृत्य प्रणिपत्य पत्रमुपदर्शयति स्म । गृहीत्वा वाचयति स्म राजा ॥३३॥

नान्हाजीको दिवमुपगतो निर्जितारात्यनीको
बालौ पुत्रौ बहति च धुरं राघवो देवरो मे ।
अद्य श्वो वा यदि मम पुरं म्लेच्छराजो निरुन्ध्यात्
त्वय्यासन्ने सुहृदि सबले कस्य वा वाच्यता स्यात् ॥इति॥

अये भद्रे निपुणतरमुपालब्धोऽस्मीति प्रत्यक्षपरिकलितामिव तां जननीमिव वीरजननीमनुनीतवान् वार्तिकमुखेन पद्यमेकमाश्वास-नार्थमस्यै चोपनीतवान् ॥३४॥

तथाहि—

किमपि न परिहीणं तावकं कार्यमद्या-
वधि गुणरतिहृद्याधेहि हृद्यान् प्रमोदान् ।
सति मयि भवदीये शक्तिरेतस्य का त्व-
त्पुरपरिसरमेतु तत्स्वयं ज्ञास्यसि श्व ॥२५०॥
औरङ्गाबादनृपतिं प्रति प्रास्थापयद् द्रुतम् ।
दूतं नागपुराधीशो महान्तो न च्छलप्रियाः ॥२५१॥

---

१. अत्र °वर्णदूत इति पठितं मया, परमर्थसङ्गत्यभावेन किञ्चिदन्यत् स्यात् ।

स च पुण्यग्रामपुरावरोधोद्योगशालिभिः ।
परीतं मन्त्रिभिर्योधैर्यथोक्तं माह तम् ॥२५२॥

सुरत्राणामात्यप्रवर नरपालो रघुपते.
सुतो जानूनामा तव सुहृदिदं बोधयति सः ।
त्यजेमं निर्बन्ध व्रज निजपुरं पालय निजा
प्रजा क्षात्रे धर्मे सुहृदिति कथा नाञ्चति पथा ॥२५३॥

एतद् राघवपक्षपातमधुरं सञ्जातमस्युन्मने [?]
त्वञ्चापातदृशाऽपि पश्यसि मधु प्रान्ते प्रपातं न च ।
पूर्वं प्रीतिपरिष्कृतेन मनसा त्वामेतदभ्यर्थये
राजन्नेकपदे मुधा[1] पुरार्जितमिदं मा त्वं यशो हारय ॥

पुण्यग्रामविनिग्रहं प्रति दृढश्चेदस्ति ते दुर्ग्रहः
[2]शङ्क्या मामविजित्य तस्य किमपि च्छायाऽपि नाप्तु त्वया
बिम्बे चण्डरुचो विसृत्वरकरे दिक्चक्रवालस्य किं
हन्त ध्वान्तकदम्बकं बत भवेन्मालिन्यसम्पादकम् ॥२५५॥

इति श्रुत्वा वीरमानी कोपकुण्डलितकोदण्डविकटभ्रूकुटि-कुटिलललाटपट्टमिदानीमेवानुभवत्वस्य दुर्नयस्य फलमयमभिमानीति सर्वमेवाखर्वगर्वपर्वतधरं बलमादिष्टवान् ॥३५॥

सम्पाद्य प्रातरेव प्रतिदिननियत कर्म्म सन्नद्धवर्म्मा
भेत्तुं वैरुद्धमर्माण्यधिरणधरणि प्रौढराजन्यधर्म्मा ।
आरूढो वाजिराजं हरिरिव गरुडं जानराजो विरूढो-
त्साह सङ्ग्राममूर्द्धिन्न्यगददिति भटग्राममुद्दामलक्ष्मीः ॥

---

१. 'मुधा' इत्यधिक पदम् । २. अत्र 'शक्या' इति पाठ समीचीन स्यात् ।

स्मर्यन्ते यैस्तनयवनिताबन्धवो जीव[वि?]त वा
प्रेष्ठ स्वेषा द्रुततरमितो यान्तु ते मानितोऽस्मि ।
प्राणा वित्ता कमलनयना कीर्तिरेवेह येषां
ते देवेन्द्रादपि गुरुतरा मत्समीपे रमन्ताम् ॥२५७॥
एवमुक्तवति मुक्तविशङ्के राघवप्रियहिताय महीन्द्रे ।
आस पञ्चकशत खलु तादृक् कन्दनालमलयेऽपि हि सर्वे[?] ॥
तेन पञ्चषशतेन सङ्गतो वीरभावपुलकोल्लसद्भुज' ।
भीमसेन इव कौरवी चमूं यावनीमविशदेष लीलया ॥२५६॥

तुमुलकरकावृष्टिमिवाविरलगोलकगोलिकावृष्टिमातन्वत्यपि घोरविस्फूर्जथुघोषे ज्वालपटलविद्युद्वलयक्षणलक्ष्यमाणस्वरूपे बहलाग्नेर्बाणपटलाम्बुदजाले ' ''खाण्डवदावदहनताण्डवसमुद्दण्ड--गाण्डीव पाणिपाण्डव इवाकम्पमानो हतावशिष्टै शिष्टै कतिपयैः समं सेनामध्यं प्रविश्य हतप्रहतविध्वस्त वज्रपाणिरिव दण्ड-पाणिरिव शूलपाणिरिव खड्गशक्तिपाणिरसावकरोत् ॥३६॥

शस्त्रश्रेणीभुजङ्गप्रसरणविषमोत्तुङ्गरिङ्गत्तरङ्ग-
त्वङ्गत्वङ्गत्तुरङ्गद्विरदगिरिगुरुप्रस्फुरद्वीरनीरम् ।
म्लेच्छेशाब्धिं प्रमथ्य श्रियमतिशयिनीं प्राप्य तेनाच्युतेन
प्रीतेन प्रापितः स्वप्रकृतिमयमियानेव जैत्रस्य धर्म्म' ॥२६०॥
विधाय रणशोधनं वरयशोधन. शोभन'
पुरारिपदपङ्कजप्रवणचित्तपूजन्धय [?]।
प्रसन्नतमराघवोपहितसत्कृति. प्रस्थित.
पुरं प्रतिसमर्चितुं सकलगोपिका गोपिकाम् ॥२६१॥

राघवतोऽप्यधिकं तं समर्हयामास गोपिकाबायी ।
निजमेव पौरुष किल भवति प्रतिपत्तिकारण महताम् ॥२६२॥

साहाय्यमस्य समरे समरे वितन्व-
न्नान्ह्यावदेनमुदित मुदित विधाय ।
तेनादृत प्रियतया स्वभुजप्रभाव-
गुप्तं स नागपुरमागमदूर्जितश्री ॥२६३॥

विप्रा कल्पद्रुममिव शरच्चन्द्रवत्पौरलोका
नार्य साक्षान्मदनमिव त मन्त्रिणो राजधर्मम् ।
द्वेष्या मध्यन्दिनदिनकराकारमुत्प्रेक्षमाणा
सद्य. स्वस्वानुभववशतो मन्वते जानराजम् ॥२६४॥

सकलबलसमन्वितो गजम्भो [स्तो][१]
मणिमयकुण्डलमण्डितास्यचन्द्र ।
निजपुरमवलोकते स्म राजा
दशरथसूनुरिवोत्कपौरलोकम् ॥२६५॥

सेतौ राघवपक्षपातवशतो यो नाम रामेश्वर
काश्या चानुजिघृक्षया विजयते विश्वस्य विश्वेश्वरः ।
सोऽयं यत्र गृहस्थमुण्डिजटिलब्रह्मिष्ठविन्ध्येश्वरः
स्तुत्य. सर्वजगत्प्रसिद्धमहिमा जागर्त्ति यागेश्वर. ॥२६६॥

यस्मिन्नागनदीन्द्रपत्तनसमे मन्दाकिनीव स्वयं
प्राय. प्रावृषि वर्द्धमानसलिलोल्लासा वहत्यागता ।
भूय सागरपानशङ्किततया कुम्भोद्भवस्योदया-
दारभ्यानुदिन क्रमक्रमगलत्तोयेव या जायते ॥२६७॥

---

१. 'गजस्तो' इत्यपि पठितु शक्यते, परमस्पष्टार्थमेतत् ।

गेहे लसन्नीरदनीलगेहे क्षरत्यजस्रं शशिकान्तनीरैः ।
तडिल्लतानां दधतेऽधिकारं यत्राधिनक्तं तरलायताक्ष्यः ॥२६८॥

केलीगृहे यत्र निरीक्ष्य सक्ता
निजाकृतिं राजतशैलशीले ।
अन्याङ्गनाशङ्कितया निशाया
निद्रादरिद्राऽजनि नीरजाक्षी ॥२६९॥

निरोष्ठ्यौ [?]
रत्नानि रत्नाचलजानि यत्ना-
ज्जनः कदाचिद् गणयेत् क्रमेण ।
यदीयहट्टाङ्गणरिङ्गमाण-
रत्नानि सङ्ख्यातुमलं न कोऽपि ॥२७०॥

अन्तर्निहितगुणानां दानं पात्रानुसारेण ।
येषामस्ति निरन्तरमनुरूपा भान्ति यत्र ते भूपाः ॥२७१॥

यत्सौधमालारुचिसारिणीषु
प्रसारिणीष्वम्बरचारिणीषु ।
आकाशगङ्गालहरीष्विवेन्दुः
परिप्लवन् हंसधियं तनोति ॥२७२॥

यत्प्रासादसमूहमौलिशिखरप्रान्ते लुठन्तः शनै-
स्तुण्डं कुण्डलयन्ति तण्डुलधिया तारासु पारावताः ।
तत्पश्यन् पुरमुत्तरोत्तरचमत्कारि प्रतीच्छन् मुहुः
श्रेष्ठिश्रेष्ठकराञ्जलिं प्रतिपदं प्रेष्ठः स्वधामासदत् ॥२७३॥

अथाङ्गुष्ठशिक्षया निषादिना साधु निषादितादिभात्सलील-मवरुह्य गजराजलील: शनै शनैश्चरमन्दमिलदिन्दिरमात्ममन्दिर-माविशति स्म ॥२७३॥

सैन्यैरथाक्षिभ्रुवविभ्रमेङ्गित
विबुध्य भूपस्य स पाणिसम्पुटै: ।
सुनन्दयद्भि: प्रभुतामयुक्ष्य[ध्य ?]तै
रगामि गेह प्रति विश्रमार्थिभि ॥२७४॥

कलितसकलपुण्यग्राममुद्दामधाम-
प्रथितविजयमित्रं चित्ररोचिष्णुचक्रम् ।
अनुमतबलभद्रं सम्परीक्ष्यातिमात्र
स्वसममुदयपात्र मन्यते माधवस्तम् ॥२७५॥

दुर्गाणि यानि रघुराजवश न याता-
न्युद्दामभाग्यविभवादनवेक्षणाद् वा ।
गेहस्थितस्य मु···विप्रभृतीनि तानि
भ्रूभङ्गिमात्रवशतोऽस्य वशानि सन्ति ॥२७६॥

बघेलान् विद्राव्य स्वपुरमभियान् मेघसमये
समासन्ने मध्येपथमयमनुष्ठेयचरित. ।
महादुर्गं दु[र्ग] निजवशमुपानीय सपदि
त्रसन्पृथ्वीसिंह. प्रणतिमुदितोऽस्मै पुनरदात् ॥२७७॥

श्रीमानेष नयेन यस्य भजते पक्ष नबाबस्य वा
पुण्यग्रामनृपस्य वा स हि जयश्रीभाजनं दृश्यते ।
धर्मो यत्र ततो जयो ध्रुव इति व्यासोदितश्रद्धया
श्रीजान· सुकृतावतार इति मच्चित्तेन निश्चीयते ॥२७८॥

वादीनि मारीच इवास्य वैरो
जादीनि[?]नामानि बिभेति शृण्वन् ।
श्रीरामचन्द्रस्य रघूद्वहस्य
श्रीजानराजस्य च को विशेष ॥२७९॥

जाने मन्त्रविधानमित्यधिसभं स्वीयप्रतिष्ठार्थिभि–
र्देवै' सचिवैश्च सन्निगदिते माहिष्मतीनायक ।
सद्यः संस्मृतजानराजमहिमा रोमाञ्चति स्विद्यति
स्तम्भं याति विकम्पते विकलतामभ्येति नारीयति ॥२८०॥

रामक्षेत्रमभिप्रयातुमनसि श्रीमत्यमुस्मिन्नृपे
तत्साम्मुख्यनिवेशितध्वजवरे माहिष्मतीभूपते. ।
चिन्तासन्ततिलुप्यमानमनसो नायाति निद्रा मना–
गभ्याशं विधिवञ्चितस्य बहुलायासेन लक्ष्मीरिव ॥२८१॥

सन्ति द्वा स्थितपाणिवेत्रलतिकाकम्पादिवोद्वेजिता[१]
नानोपायनपाणयो नृपतयो द्वार्येव कार्येच्छवः ।
यान्त्यायान्त्यनिवारिता· प्रतिपद सम्भाव्यमाना द्विजा
ब्रह्मण्यत्वमिद हरेरिव महाराजस्य तस्याद्भुतम् ॥२८२॥

देवार्चासमये स्फुटाक्षरपदं सम्भाव्यमान सतां
श्रीमद्भागवतं महामुनिकृत भक्त्या शृणोत्यन्वहम् ।
ब्रह्मज्ञाननिधानवानपि समाधत्ते प्रकृत्या समं
नीतेस्तत्त्वविनिर्णयं जनकवद् दुर्बोधचेष्टो महान् ॥२८३॥

१. क. °ह्कम्पिणो' इति पाठान्तरम् ।

मातापित्रोस्त्रिदिवगतयो. पार्वतीशम्भुमूर्त्यो.
प्रासादं तं तदुपवनमध्ये स कैलासकल्पम् ।
चक्रे यस्मिन् भवति सततं चैत्रशुक्ले विशेषा–
दिच्छाभोज्यार्पणसमुदयो गीतनृत्योत्सवश्च ॥२८४॥
सततमेव महोत्सवसुन्दर विलसदिन्दिरमस्य च मन्दिरम् ।
नरवरस्य चिरस्य विशेषतो भवति तेषु विशेषदिनेष्वलम्[१] ॥
भाद्रे वारिदवारिवारितपथे श्रीकृष्णजन्मोत्सव
श्रीहेरम्बमहोत्सवञ्च समहोत्साहो विधत्ते तमाम् ।
द्रष्टुं श्रोतुमथ क्षमेत कथमप्येतत् कथं जिह्वया
वक्तु त्वेकिकयोत्सहेत मनुजस्तद्भक्तिसद्भावत. ॥२८६॥
श्रीदुर्गोत्सवमाखिले [?] रुणहरिद्राभासितैर्मण्डयत्यु–
ष्णीषै रुचिराञ्चलैर्द्विजगणान् जात्यानमात्यानपि ।
कश्मीरादिकदेशजातविविधप्रावारकैरप्यय
भान्त्येते तु ततेन्द्रचापरचना···रवाम्भोधरा. ॥२८७॥
माघे श्रीशिवरात्रिपूजनविधौ भक्तो भवानीपते–
र्योगेशस्य करोति नागरजनै सार्द्धं स यागोत्सवम् ।
यस्मिन् दक्षिणयार्चिताः प्रचुरया भूदेवताभूपतिं
साक्षाद् वित्तपतिं स्म मन्वत इम चित्तप्रसादाद् ध्रुवम् ॥
असौ चैत्रे चित्रापतिसमुदये चित्रचरित–
स्फुरच्चित्तो विस्तारयति रघुराजोत्सवविधिम् ।

---

१. '°ष्वहो' इति पाठान्तरम् ।

किं वा

नक्तं नृत्यैप्रवणगणिका गानक...या[१]
सदानन्दो यत्रोदयति हरिदासोरुकथया ।[२]

शिवभावमुपागतस्य भक्त्या रघुराजस्य मुदे मुख्य[?]प्रियस्य ।
विपणिं विभजन्ति यत्र पूर्ण नवरात्र वणिजोऽस्य वाटिकायाम् ॥

सह मुदरियाबायीदेव्या गुणैरनुकूलया
सुकुलभवया जानूजीकः स्वय हरिणीदृशा ।
निजभवनतो गत्वा गत्वा...मन्वहमीक्षते
वहति च परीतोषं पुष्णात्यपि स्फुटमर्थिन ॥२९१॥

[३]बुद्ध्या तिरोहितसुरेशपुरोहितोऽय-
वासोजिपादपतिसंहितचित्ततोषः ।
यो वाचा जितोऽहिपतिरादितचित्ततोष ॥२९२॥

सर्व्वस्य संसदि······रधाकुलिष्णुवोत···वाकलितमर्णि
गमागम...[?]

अधिगतमतिवेलं यस्य चातुर्यसार्यं
विबुधगणविचार्यं देवताचार्यवर्यः ।
अमरपतिसमक्ष स्तौति सर्वार्थदक्षं
स जयति भुवि वेणीरामनामा द्विजेन्द्रः ॥२९३॥

---

१ २. अपूर्णे मन्दाक्रान्ताशिखरिण्यौ । ३. इत आरभ्य—'धिया स्वीयया' यावत् सर्वमेतत्पत्रप्रान्तेष्वस्फुटतर लिखितम् ।

सौन्दर्यं गति रक्षा पतिनयत[?]

निकामं वसन्,काश्या पण्डितमण्डलीभिरधिकप्रेम्णा चय. स्तूयते ।

चिन्तातीतधनार्पणा जयति यश्चिन्तामणिर्हेलया-

वेणीराम सह. नृपहिते सक्तो धिया स्वीयया[?] ॥२६४॥

हट्टे हाटकसम्पुट सुघटित सम्वद्धकूर्पासका[१]

मस्तन्यस्तपटाञ्चला नवघनश्यामा द्युति चापलम् ।

मुष्टीभूतकरा वरावलमणिश्रेणि वणिग्योषितो

युक्तौघ मुकुलीकृतास्य कमला विक्रीणते संज्ञया[?] ॥२६५॥

वितरणाध्ययनेश्वरपूजनागुरुजनानतिकर्मभिरुत्तमै ।

नयति सज्जनतुल्यमबन्ध्यतां दिनमय नमयन्नरिमण्डलीम् ॥

कारुण्यं कबरीकृतेन चमरीतस्या जगत्या ययौ

कालुष्य करिणीहठेन हरिणी दुद्राव दृग्भङ्गिभि ।

उक्तो की विकीर्णहृदया श्रीजानराजद्विषद्-

बालाना वनवासकौशलसखीभावाय का वा भवेत् ॥२६७॥

सत्कारुण्यपुषः स्वधन्यजनुषस्तारुण्यलीलाजुषः

पुण्यश्रीवपुष. सज्जीवधनुषः प्रद्रावितोग्रद्विष. ।

अस्य प्रत्यहवर्द्धमानसुयशोधाराभिरारादिदं

तारादिस्फुटरन्ध्रत स्फुटदिव त्रैलोक्यमालक्ष्यते ॥२६८॥

---

१ 'वक्षोवलत्कञ्चुका' इत्यपि पाठो निर्दिष्ट. ।

उन्मीलद्विजयार्जितोर्जितवसोर्नासत्यजाताहित-
प्रीतेरुत्तममानया विदधत शक्त्या विशल्य जगत् ।
कृष्णासक्तिपरस्य भारतरणोद्यद्भीमसेनस्य च ।
स्थाने तस्य युधिष्ठिरस्य भवने धर्मात्मता गीयते ॥२९९॥

श्रीनारायणभट्ट पुरोहित श्रीमतस्तस्य ।
सदनुष्ठानविधिज्ञो युधिष्ठिरस्येव धौम्यऋषि. ॥३००॥

आनीत परमादरेण मिथिलादेशादशेषार्थविद्
धीरश्रीधरणोधराधिपमहोपाध्यायशब्दैकभूः ।
राज्ञस्तस्य सभामनेकसुमन सार्थान्विता शोभय-
त्युच्चैः शोभनयुक्तिभिः सुरपतेर्धारामधीशो यथा ॥३०१॥

मूकीकृत्य विवा[व]दूकविदुषो योऽजागरत् कर्मतो
भूपं प्रीणयतीह पाणिनिवच. स (द्) वावदूकैः सदा ।
प्राप्तो मैथिलशास्त्रिताश्रुतिमति ख्याते" कारव्रतो
राज्ञ. प्रीतिपदं विभाति सदयारामोऽभिरामो गुणैः ॥३०२॥

मीमासाद्वयसाङ्ख्यचुम्बितधियोऽन्येऽप्यस्य राज्ञ सभां
पञ्चद्राविडभूसुरान्वयभुवो वै द्योतयन्तेतराम् ।
येषां वै....वमद्भुतं कियत् कर्तुं क्षमेणीय सिमुण्डीन्द्रिय[?]
कियदुच्चिनोति कनकं रङ्गानि जवोरके[?] ॥३०३॥

चातुर्यं वचसां सुरेश्वर गुणैर्जेतु परा[?]
प्रज्ञा सुन्दरफारसीकलिपिषु [हृदि] श्रीकृष्णभक्तिः स्थिरा ।

यस्यास्ते स भवानिपन्तसुकृती राज्ञः प्रतीते. पद

प्रीतेश्च प्रतनोति संसदि सदा स्वीका... ॥३०४॥

सूबेदार उदारो जीनपन्तो नृपस्य सुविशिष्टः।

इष्टाशिष्टस्तनुते नृपकार्यं यो विद्याववद्या...॥

शैलेग्रो यादवानामिव भुवि विदितो द्रौपदः पाण्डवानाम् ॥

श्रीमान् वैकर्णनो बान्धवपति

———

# लक्ष्मीगुणमणिमाला

## मैथिलकविकृष्णदत्तविरचिता

ॐ नमो गणेशाय ।

लीलोदस्ताग्रहस्तान्तरतलवलितं स्वच्छनक्षत्रमुक्ता-
गुच्छ स्वच्छन्दमम्भष्कणगणमिषतो विक्षिपन् दिक्षु मङ्क्षु ।
भुक्तै सौरस्ययुक्तै प्रचुरघृतसितालड्डुकैर्भक्तदत्तै
प्राप्तो लम्बोदरत्वं करिवरवदनो मेऽवलम्बोऽस्तु नित्यम् ॥१॥

सकलनृपवतंसो भोसलावशहंसो
ललितविलसदंसो ग्रीष्महंसोरुतेजा. ।
अरिकरिमृगराज सम्पदा राजराज-
श्चिरमिह विरराज श्रीयुतो जानराज. ॥२॥

तत्पत्नी रमणीयभूषणमणी सर्वार्थिचिन्तामणी
लक्ष्मीनामवती विभाति रमणीसीमन्तमुक्तामणी ।
अस्मिन् भूवलयेऽखिलेऽपि दरिआबायीति या विश्रुता
सेयं मैथिलकृष्णदत्तसुकवौ धत्तेऽनुकम्पां पराम् ॥३॥

ग्राम दत्तवती कुटुम्बकभृतो योग्य सुवस्त्राणि मे
दत्ते दास्यति चाप्यनन्यगतये सेवार्थमुद्यद्दया ।
श्रीलक्ष्मी प्रभुतामतीव दधती तस्यास्तु सम्प्रीतये
लक्ष्मीनामसुलक्षिता गुणमणीमाला मया तन्यते ॥४॥

प्रभुमानविकस्वरमतिना कविना निबद्धेयम् ।
लक्ष्मीगुणमणिमाला पण्डितकविकण्ठभूषणं भूयात् ॥५॥

आनन्दज्ञानकन्दं स्वजननयनयोश्चन्द्रमाश्चन्द्रभागा-
तीरालङ्काररत्नं किमपि कटितटन्यस्तहस्तारविन्दं ।
प्रव्यक्तः पुण्डरीकद्विजबहु[1]तपसा पुण्डरीकायताक्षः
श्रीलक्ष्म्या भक्तिमत्या भविकमविकलं पाण्डुरङ्गस्तनोतु ॥

आयान्ती वसुधा पितामहमुखाम्भोजालयात्कौतुकाद्
वाग्देवी सुकुमारसुन्दरपदा श्रान्तिं विमुञ्चेत्कथम् ।
स्थित्वा सत्कविराजराजिवदने चन्द्रे विदध्यादियं
लक्ष्मीदेवि न चेद् भवद्गुणगणश्लाघासुधासेवनम् ॥१॥

म्लेच्छच्छद्मनिशाचरक्षयसमारम्भोद्गलद्भोसला-
भास्वद्वंशवतंसतामुपगतो रघ्वन्वयो वर्द्धते ।
श्रीलक्ष्मी रघुनन्दनप्रियतमा भूत्वा पवित्राशया
भूयो भूषयति प्रभूतयशसा यः सर्व्वदिग्व्यापिना ॥२॥

लक्ष्मीदेवि न चित्रमत्र विमलो यद्दक्षिणस्ते करो
दाक्षिण्यं बहुदक्षिणावितरणारम्भे समालम्बते ।
तच्चित्रं दशदिक्षु भिक्षुसुदृशामक्षुण्णभाग्योदयं
वामं चक्षुरनुक्षणस्फुरणतो दाक्षिण्यमाप्नोति यत् ॥३॥

लक्ष्मीदेवि सदा गुणे समधिकप्रेमाऽसि तस्यान्तरं
त्वं जानासि च किन्तु दानसमये दित्सासमुत्साहतः ।
वृष्टिं हेममयीं गुणिन्यपगुणे चार्थिव्रजे वर्षसि
क्षेत्रेष्वेव किमुन्नता वितनुते कादम्बिनी वर्षणम् ॥४॥

1. °प्रकटित° इति पाठान्तरम् ।

पुण्यौन्नत्यकरे करे जलधरे तावत्कचञ्चत्तरे
लक्ष्मीदेवि सुकाञ्चनामृतमयी वृष्टि समातन्वति ।
आसीत् कीर्त्तितरङ्गिणी समुदिता दारिद्र्यदावानल.
शान्तो हन्त सतां गता सफलतामाशालता चार्थिनाम् ॥५॥

लक्ष्मीदेवि रघूद्वहस्य भवती भार्यानुरूपा गुणै–
रस्त्येषा तव जन्मना भगवती विश्वम्भरा रत्नभूः ।
औन्नत्यं जनकान्वयश्च गमितो रघ्वन्वयश्च त्वया
शत्रुघ्ने भरते बिभर्षि विनय त्व लक्ष्मणे देवरे ॥६॥

पातिव्रत्यधुरन्धरा समभवन् काश्चिद् वसिष्ठप्रिया–
मुख्याः काश्चन या शचीप्रभृतय· साम्राज्यलक्ष्मीभृत. ।
एका केवलमेव सम्प्रति धुर तासाञ्च तासाञ्च सा
लक्ष्मीदेवि दधासि पासि जगती श्रीजानराजप्रिये ॥७॥

कारुण्यैरविमुक्तमेव हृदयं शोणप्रभासौ करे
हासश्रीर्म्मधुरा सितासितमिदं चक्षुर्मुखं पुष्करम् ।
श्रीवक्ष स्थलमस्ति ते पुरमिदं कीर्त्तिर्व्विशालोज्ज्वला
लक्ष्मीदेवि किमद्भुतं त्वमसि यत्पुण्यैकभूमिर्भुवि ॥[1]

लोकेषु त्रिषु भूमिरेव भजते श्रीरत्नगर्भापदं
देशो दक्षिण एव देशगणने दाक्षिण्यमालम्बते ।
यत्र प्रादुरभूत्पुरा भगवती लक्ष्मीः स्वयं रुक्मिणी
श्रीलक्ष्मीरधुना तु यत्र समभून्नाम्नाऽपि धाम्नाऽपि च ॥९॥

---

१. तु० जा० रा० च० १३३

विप्रा कल्पलता प्रजा. स्वजननी नीति गणा मन्त्रिणा
पौरा शारदचन्द्रिका रिपुजना मध्याह्नसूर्यप्रभाम् ।
लक्ष्मीदेवि जगद्विलक्षणगुणग्रामाभिरामाकृते
त्वा सूक्ष्मानुभवेन मन्वत इमे सर्वेऽपि साक्षाच्छ्रियम् ॥१०॥
चेतु कल्पतरो. शिरोजकुसुमान्यायम्य भग्नेप्सिता
श्रान्ता स्वर्व्वनिताः सुधासमधिका गायन्ति कीर्ति तव ।
लक्ष्मीराज्ञि गुरुत्रपाभरवदिन्ना[?] नमत्यादरात्
ता. सिद्धार्थतया भवन्ति मुदिता न क्वासि देव्यर्थदा ॥११॥
सक्ता केशवशङ्कराङ्घ्रिभजने रक्ता प्रजापालने
भक्ता विप्रजने सहिष्णुरधिक शक्ता वियल्यामपि[?] ।
लक्ष्मीदेवि भवत्समा न भविता नासीन्न वा वर्त्तते
स्याद् वा कापि तदोपमैव भवती सैवोपमेया भवेत् ॥१२॥
त्व गोदानादिनानासुकृतसमुदय तन्वती नन्वतीव
श्रीलक्ष्मीदेवि सत्यं हरिहरचरणाराधनासावधाना ।
या सर्व्वा एव सिन्धूस्तदधिवसतये क्षीरसिन्धूकरोषि
स्थाने स्थाने च शैलानपि निजयशसा रूप्यशैलीकरोषि ॥१३॥
शङ्कन्ते केचिदङ्क जगति जलनिधे· पङ्कमेके कुरङ्गं
केचिद् भूच्छायमन्ये यदमृतमहसि श्यामलत्वमस्ति ।
श्रीलक्ष्मीदेवि युष्मद्यशसि समुदिते[१] निह्नवं मैष यायाद्-
दित्याशङ्कयैव शङ्के विधिरधित मसीमुद्रिकामेतदङ्के ॥

१ 'धवलिने' इति पाठान्तरम् ।

श्रीशः सत्त्वमयोऽपि नीलरुचिर श्वेत. शिवस्तामसोऽ-
प्यासीद् ध्यानवशान्मिथस्तदनिशध्यान हि ताद्रूप्यकृत् ।
लक्ष्मीदेवि ततोऽनिश भृशमसौ ते शुद्धवर्ण यशो
गायन्ती किल तन्मयेन मनसा गीः शुद्धवर्णाऽभवत् ॥१५॥

सार्द्ध प्रत्येकमावामपि जगदवन कुर्व इत्युक्तवन्तौ
लक्ष्मीनारायणौ तौ ध्रुवमवनिसुतारामचन्द्रावभूताम् ।
श्रीलक्ष्मीजानराजौ सह विहितजगत्पालनौ तत्र वाम. [रामः]
ध्यायन् कान्ता धरित्रीमवति पतिपदं सस्मरन्त्यत्र लक्ष्मी. ॥

वैमात्रेयेऽपि भर्त्तुर्विमतिमति सति प्राच्यसाम्राज्यशोभां
सूनावाधातुकामे विहितबहुविधोपाय उद्दामधाम्नि ।
लक्ष्मीदेव्या स्वयुक्त्या निजवचनकरो नीतिमत्या महत्या
सेनासाहेबसूबापदमधिगमितो देवर साम्बराज. ॥१७॥

लक्ष्म्या सानुग्रहेण स्फुटकमलरुचा लोचनान्तेन दृष्टो
हृष्टो देवाधिराजो व्यजयत समरे दानवान् मानवान् प्राक् ।
श्रीलक्ष्म्या सम्प्रसादामलरुचिरदृशा पुत्रवत्प्रेक्ष्यमाणः
साबाजीभूमिपालो नयति निजवश शत्रुमत्राद्भुतं किम् ॥

श्रीलक्ष्मीदेवि सत्यास्तव सततवलद्भक्तिपीयूषधारा-
धौतान्तर्व्वासित श्रीपतिपदकमलध्यानविध्यादृतायाः ।
शङ्के तिर्यग्गतित्व द्युतिपतिरनतिक्रान्तये श्लाघतेऽसा-
वङ्घ्रिस्पर्शातिधन्यावनिबहनकृते शेषनागः शिरांसि ॥१९॥

अश्मा स्पर्शमणि सवल्कलतया कल्पद्रुम कर्कशो
देवानां सुरभि पशुः शशिकला मित्रोदयोपेक्षिणी ।
लक्ष्मीदेवि कृपाजुष. सुवपुषश्चातुर्यशैलीजुषो
मित्रोल्लासतुषोऽनुयान्तु समतामेते कथ ते भुवि ॥२०॥

स श्लाघ्य स गुणी स एव सुकृती स प्रौढभाग्योदय.
श्रीमत्या करुणाकटाक्षकलया यो नाम सम्भावित ।
शीलाद्या सकला गुणा विगुणतामायान्ति
यस्य त्व विमुखीभवस्यनुपमे लक्ष्मीमहाराज्ञि हे ॥२१॥

लक्ष्मीदेवि दयानिधे तव यशोवल्ली प्रदानाम्भसां
सेकात्पल्लविता व्यचीकशदल चन्द्रच्छलात्कुड्मलम् ।
दृश्यन्तेऽस्य सुधारसातिसुहिता ज्योत्स्नापरागैः सिता-
स्ताराभा भ्रमरा बहिर्म्मृगमिषादन्त. सपद्यागता. ॥२२॥

ब्रह्माण्ड विनिजूहुरेऽतिवितते पद्मा जले काञ्चन
मेरुः स्वर्णमयः सुपर्व्वभवन गूढो निधीना गण ।
यत्नादावृणुते च वीचिनिचयै रत्नानि रत्नाकर
श्रीलक्ष्म्याः प्रभुतानिधेः कथमहो दित्सारस. पूर्य्यताम् ॥२३॥

जानूजीपुरुषोत्तमे प्रियतमे लक्ष्मीमहाराज्ञि ते
ये केचित्करुणाकटाक्षकलया दृष्टा जना श्रीमति ।
तत्तत्कान्तकुटुम्बिनीश्रुतिनटत्ताटङ्करत्नांशुक-
ज्योत्स्नाभिर्धवलीभवन्ति भुवने का वा न दिग्भित्तयः ॥२४॥

प्राणादानरस्य देवतरवो नानाजनाना [?]
विद्वद्दैन्यमहाघतापशमने पञ्चाक्षरी शाम्भवी ।
लक्ष्मीर्वागधिपा महेशवनिता शक्रप्रियारुन्धती
प्रत्येकस्मृतिहेतुरेव दरियाबायीति पञ्चाक्षरी ॥२५॥
त्वद्गाम्भीर्य्यमहत्त्वमुद्रितमहागम्भीरिमाडम्बरे
सिन्धौ पङ्ककलङ्कसङ्करतया स्नातु[1] न शक्तः प्रभुः ।
श्रद्धाभक्तिरसामलेतरहृदि श्रीशो वसत्यादरा-
ज्जानूजीनृपपत्नि लक्ष्मि वसति श्रीस्तेन सर्व्वात्मना ॥२६॥
श्रीमत्याः शीलवत्या जगदवनविधिप्रौढिमत्या सुमत्याः
श्रीलक्ष्मीदेवि सत्यास्तव भुवनमुखा[2] पुण्यनैपुण्यकीर्त्तीः ।
वक्तुं श्रोतुं स एको दशशतवदनो वेद चक्षुश्श्रुतीशः
शक्रः चक्षुश्श्रुतित्वान्नयनदशशती मन्यते भारमेव ॥२७॥
नित्याक्षीणकणैरनङ्कधवलैः श्रीमद्यशोमण्डलै-
र्लक्ष्मि श्रीमति जानराजदयिते निर्वासितश्रीश्शशी ।
राजद्राजतभाजनस्थितमहानीलाश्मशम्भुभ्रमाद्
दत्तान्युक्षगणाक्षतानि चरतु स्वैरं सुरैः केवलम् ॥२८॥
गामेकां त्रिपदीमितां गुरुगिरोऽतिक्रम्य वैरोचनिः
प्रादाद् वामनरूपिणेऽत्र वटवे सोऽभूद् वदान्यः श्रुतः ।
लक्ष्मीदेवि ददासि गा अनुदिनं सोपस्कराः शोभना
विप्रेभ्यो बहुविद्भ्य आदृतगुरुस्त्वं तद्वदान्योत्तमा ॥२९॥

---

१. 'वस्तु' इति पाठान्तरम् । २. '°सुखा' इत्यपि पठितुं शक्यते ।

श्रीलक्ष्मीदेवि जानूनृपतिकुलशिरोरत्नभार्य्ये शुभार्य्ये
नृत्यन्त्याश्चारुमूर्त्तेः सुरसदसि भवत्कीर्त्तिशैलूषिकाया ।
मन्दाकिन्युत्तरीय परिसरविलसत्तारकाशुक्तिकौघ-
स्ताटङ्क मध्यरन्ध्रप्रतिफलितवियद्व्यक्तलक्ष्मा मृगाङ्क ॥
[१]ध्वान्तस्तोममसीरसस्नपनत श्यामायमाने नभ-
पट्टे भास्करशोधिते शशिशिलाखण्डेन सङ्घर्षिते ।
नक्षत्राक्षरगुम्फितानि लिखति श्रीलक्ष्मि जानूनृप-
श्रेष्ठप्रेयसि पद्मभू किल यश पद्यानि हृद्यानि ते ॥३१॥
पितुर्म्मातु पत्यु कुलमिदमलङ्कृत्य सकल
सती वन्द्या जानूनृपतिदयिते लक्ष्मि भवती ।
त्रिलोकी गङ्गेव श्रवणकथनप्रश्नवलितं
पुनाति प्रत्येक हरिहरकथेव त्रिपुरुषम् ॥३२॥
तरुच्छायेवालं तपतपनसन्तापमखिलं
तमिस्र ज्योत्स्नेव स्मरहरकथेवाघनिकरम् ।
जनाना जानूजीपुरुष[र]मणि प्रेयसि दयो-
दयोदारा दैन्यं हरति सतत लक्ष्मि भवती ॥३३॥
कलङ्केनास्पृष्टः प्रकटितकलङ्क धृतकला-
कलापं राकायां परमनिशपूर्णाखिलकल ।
गुणाधारो दोषाकरमयमये लक्ष्मि भवती
यशश्चन्द्रश्चन्द्र यदि विजयते चित्रमिह किम् ॥३४॥

---

१. 'द्वेष्या कीर्त्ति°' इति पाठान्तरमुपरि लिखित वर्तते ।

ब्रह्माण्डस्वर्णभाण्डप्रतिभरणसमुद्वृत्तसद्वृत्तकीर्त्ति-
श्रेणीरत्नाभताराबलिवलितवियत्प्राङ्गणादेव भक्ता ।
श्रीलक्ष्मीदेवि लक्ष्मीसदृशगुणगणे विश्वमान्या वदान्या
त्वत्तोऽन्या नास्ति धन्या जलनिधिलहरिस्रग्धरायां धरायाम् ॥

एतन्नीलोज्ज्वलमतितमामम्बर दिग्वधूना-
मुद्यत्ताराबलिकपटतश्चित्रितं त्वद्यशोभिः ।
भाति प्रायो रजतजलवद् भासकालीसरञ्चेत् [?]
लक्ष्मीदेवि प्रथितविनयोदारताधैर्यशीले ॥३६॥

धीरा धर्म्मधुरन्धरा धृतधरा धीधारिणीधारया
वित्ताना विधिवर्द्धिनी विदधती विद्यावता वैभवम् ।
पौलोमीप्रतिमा प्रसिद्धिपरमा प्रौढप्रतापप्रभा
जाया जानजनाधिपस्य जयिनी जागर्त्ति लक्ष्मीरियम् ॥३७॥

त्वं गौरी गुणगौरवे सुचरिते चारुन्धती चारुणि
श्रीस्साक्षाद् विभवे च कल्पलतिका दाने क्षमायां क्षमा ।
श्रीलक्ष्मीरिह राजते सुवचनन्यासे च वाग्देवता
जानूजी [1]बहुसङ्गरं [कुल?]सुधाभानोरियं रोहिणी ॥३८॥

अन्वीक्षामिव सप्रमाणवचना सच्छब्दविद्यामिव
प्रोन्मीलद्गुणवृद्धिभावरचनां वेदान्तविद्यामिव ।
सानन्दा कवितामिवाच्युतपदानुध्यानसम्भाविता-
मर्थं साधयितु भजन्ति सुधियो लक्ष्मी जगद्वन्दिताम् ॥३९॥

---

१ 'नृपभोसले'ति पाठान्तर दत्तम् । अग्रेऽक्षरद्वय पठितु न शक्यम् । 'कुल' इति पूर्त्यर्थमेव मया पठितम् ।

सम्पन्नाभरणार्च्चिताभिरमलाभाभि स्फुरत्पाणिभि

पार्श्वे चामरवाहिनीभिरधिकानन्दाभिरासेविता ।

आरूढा शिबिकां क्वचित् क्वचिदिभं बाह् क्वचित्स्वेच्छया

¹साम्राज्यञ्च समुन्नता[त]विदधती लक्ष्मी. शची निन्दति ।।

नालस्यप्रसर. स्वकोषघटना मित्रोदयोल्लासिता

पत्राणि स्फुटकान्तिमन्ति परितो राजद्द्विजालिर्ध्वनि ।

इत्येषा स्थितिरस्ति यत्तव सरोजस्येव मन्ये ततो

वास: सुस्थिर एव लक्ष्मि वलते पद्मालयाया त्वयि ।।४१।।

²भण्ड श्रीललिताप्रचण्डचरित शुम्भ निशुम्भञ्च सा³

सीता वैश्रवणं सहस्रवदनं जैत्र हरेरप्यहन् ।

लक्ष्मीदेवि समुद्धतारिजयने सज्जाऽत्र यज्जायसे

तज्जानामि भवादृशीभिरखिल स्त्रीभिर्जगत्पाल्यते ।।४२।।

सर्वत्राव्याहताज्ञा तव वलति नृपैरुह्यमाना शिरोभि:

सर्वत्राव्याजभव्या प्रसरति च भवत्कीर्त्तिरेकैव नित्यम् ।

श्रीलक्ष्मीदेवि सर्वैरवनरचनया माङ्गलिक्या कृतार्थे

त्वय्याधीयन्त एवागमनिगमपरैराशिषो वैजयिक्य ।।४३।।

आस्येन्दुश्चन्द्रकान्तो रुचिररुचिमहानीलरूप. कचौघ

पादौ ते पद्मरागौ सुललितहसिते हीरकश्रीरुदेति ।

हस्ते चिन्तामणिस्ते वितरणकलयोन्नीयते स्म प्रशस्ते

श्रीलक्ष्मीदेवि कस्ते न वदति जगतीरत्नतामै[मे?]कमत्या ।।

---

१. 'साम्राज्यमुन्नतामि'त्येव लिखितं लिपिकारेण । २ 'भग्न' इत्यपि शक्यते पठितुम् । ३. पादान्ते 'शिवा' इति पाठान्तरं दत्तम् ।

नियमयसि विमार्गप्रस्थितानात्तदण्डा
प्रशमयसि विवादं कल्पसे रक्षणाय ।
प्रणयसि कृतधर्म्मं तिष्यकालेऽपि लक्ष्मि
त्वमिति भवति राजाधीनताऽनेहसो हि ॥४५॥
कर्णाटे कर्णिकारे कटककुरबके कुब्जके कान्यकुब्जे
कह्लारे कोङ्कणाङ्के कुरुकुवलयके किङ्किराते किराते ।
अङ्गे बङ्गे लवङ्गे द्रविणदमनके जानराजो मिलिन्द.
सारग्राही मिलिन्दस्तदनुगुणगुणा भाति लक्ष्मीमिलिन्दी ॥
पत्यौ शम्भुपदं गतेऽनुगमनायाभ्युद्यताऽप्युत्तमै–
र्भाईभट्टमुखैर्द्विजै.[१]श्रुतिसखैरभ्यर्थ्य सत्योन्मुखैः ।
हे लक्ष्मि त्वदधीनमद्य विदुषा ब्राह्मण्यमत्र स्थले
तद्रक्षेति सुहृद्भिरप्यनुनयाद्यावर्त्तितेयं ततः ॥४७॥
श्रीकैलासनिवासिनो गुणनिधेः पत्यु पदाम्भोरुह–
द्वन्द्व तन्मयतां गतेन मनसा सन्धारयन्ती सदा ।
तत्सम्भावितलालिता· प्रतिपदं सम्पालयन्ती प्रजा
स्तत्कीर्त्तिं द्विगुणीकरोति चरितैर्लक्ष्मीमहाराज्ञ्यसौ ॥४८॥
पत्या सद्गुणवेदिना समुचितं सम्मानितास्तेन ये
विप्रा देशविदेशजा अपि तया सर्व्वेऽपि सम्भाविता. ।
काचिद्दण्डविदायवित्तनिवहा लक्ष्मी· समप्रीणयद्
ग्रामप्रात्यहिकव्यवस्थिततया चास्थापयत् स्वाश्रितान् ॥

---

१. 'श्रुतिसखै' इत्यतोऽग्रे '(श्रीमती)' इति लिखित वर्तते ।

तद्वच्छिष्टविशिष्टलालनकला तद्वत्प्रजापालन
तद्वद्दानविधानमानकलना तद्वद्विशेषज्ञता ।
भर्त्तु सन्ततसाहचर्य्यवशत स्त्रीणां समं चेष्टित
स्यादित्यागमभाषितं न हि मृषा लक्ष्मीमहाराज्ञि हे ॥५०॥
अन्त साक्षिकजन्मजन्मजटिताभ्यासाय भूतार्थक
गीतं देशजभाषया मधुरया निर्म्माय लक्ष्मीरियम् ।
पूर्णा व्यञ्जयति प्रसादसुमुखे [1]गतां [?] प्रेमभक्ति हरौ
विज्ञानञ्च तनोति यच्छ्रुतिगतं चेतोद्रुति धीमताम् ॥५१॥
लेखायां शशिनः कलङ्ककलनावैकल्यसम्भावना
शच्या गोत्रभिदाग्रह. कुटिलताजाड्य द्युनद्यामपि ।
स्वीकृत्य व्यभिचारिणो गुणगणा लक्ष्मि त्वयीव त्वयि
प्रेक्ष्यन्ते च परस्परानुगुणिनस्ते शीलधैर्यादय ॥५२॥
अस्माभिर्निजदेश एव बहुधाऽकर्णोति यद्दक्षिणे
देशे मूर्त्तिमती स्फुरद्गुणवती लक्ष्मी स्वय तिष्ठति ।
तत्प्रत्यक्षतयाऽनुभूतमधुना दृष्टाऽसि यच्छ्रीमति
त्वं साक्षात्तव सम्पदश्च बहुला श्रीजानराजप्रिये ॥५३॥
विद्या स्वभ्यस्य हृद्यां विनयमपि सुसम्पाद्य चासाद्य दाक्ष्यं
लक्ष्मीमाराध्य नारायणचरणपरा वित्तधारा उदारा. ।
आनेष्यामो वयं द्रागिति किमपि शिशुक्रीडितेऽपि प्रसक्ता
देशे देशे वदन्ति त्वदुरुगुणदृढप्रत्ययादर्थिबाला: ॥५४॥

इति श्रीलक्ष्मीगुणमणिमालायां पूर्व्वार्द्धम ।

---

१. 'सता' इत्यपि शक्यते पठितुम् ।

सन्ति द्वास्थितपाणिवेत्रलतिकापातादिवोत्कम्पिनो
नानोपायनपाणयो नृपतयो द्वार्य्येव कार्येच्छव. ।
यान्त्यायान्त्यनिवारिता. प्रतिपदं सम्भाव्यमाना द्विजा
ब्रह्मण्यत्वमिदं तवाद्भुतमिह श्रीलक्ष्मि लक्ष्मीनिधे· ॥५५॥

न्यस्ता हस्ताम्बुजाते वितरितुममले मुक्तिकारीक्ष्यमाणा
गुञ्जाकार[रा?]भवन्ति द्रुतमथ चकित [१]ब्राह्मणा भावयन्ति
श्रीलक्ष्मीदेवि किञ्चिद्धसितकलि[णि]कया मुक्तिकीकृत्य दूरा-
देतेभ्यो वेदविद्या वितरसि किल ता सम्प्रसन्नाननेभ्य. ॥५६॥

अमलकमलहस्ता सुप्रशस्ता समस्ता-
नपि विबुधसमूहान् सम्यगाश्वासयन्ती ।
अतिसुललितमूर्त्तिर्विश्वविख्यातकीर्त्ति-
र्जगति जयति लक्ष्मीरत्र लक्ष्मीरिवेयम् ॥५७॥

नखरुचिकुसुमश्रीरङ्गुलीपल्लवाढ्य-
स्तव करसुरवृक्षो यत्सदृक्षो न दृष्ट· ।
स इह लसति लक्ष्मीदेवि दूरस्थिताना-
मपि भवति समन्तादर्थिनां तापशान्तिः ॥५८॥

कं सानन्द न धत्ते दलितकुवलयापीडभावं विधत्ते
गोपालीभ्य प्रदत्ते रतिमतिशयिनी भाग्यसौभाग्यसिद्धिम् ।
साम्बेश नालनी·· [?]कलयति विजये पालनीयेऽनुरक्तं
लक्ष्मीदेव्याश्चरित्र हरिचरितमिवातीव चित्रं पवित्रम् ॥५९॥

---

१. 'पाठका' इत्यपि पाठान्तर निर्दिष्टम् ।

महाराज्ञी लक्ष्मीरियमुदितलक्ष्मीरनुदिन
ददाति प्रत्येकं वसनमशनञ्चाश्रितवताम् ।
यश शाटी नाच्छादयितुममला सद्गुणमयी
सुधामेतामास्वादयितुमपि साधारणतया ॥६०॥

देव्या यत्कृपया चिराय दधते सेवाभृतस्तत्पद
यामेनामतिशिक्षया समुदितामाख्यातसत्याश्रय ।
ऐश्वर्य्येण युता समुन्नतमहासेनानुयाता शिवा
श्रीलक्ष्मीरथवा भवाञ्चितगुणा सेय जगद्रक्षति ॥६१॥

ब्रह्माण्ड वरपिञ्जरीयति यशोहसावतसस्य ते
लक्ष्मीदेवि पुरस्थितोपमशनक्षीरीयति क्षीरधि. ।
चञ्चच्चञ्चुपुटीविघट्टिततया या विप्लुता विप्रुष–
स्ता एता गगने स्फुरन्ति नियत तारद्युतस्तारका ॥६२॥

लक्ष्मीदेवि तव स्फुरद्गुणगणक्षीरोदधेरुत्थितो
वातावर्तविशेषतो दिविगतो हिण्डीरपिण्डो विधु ।
अस्यान्त. पृषता गतास्तत इतस्तारा. स्थितास्ता ध्रुब
व्योमाङ्क. प्रतिबिम्बित स्रवति च ज्योत्स्नारस सर्व्वत.[?] ॥

त्वं साक्षान्मधुसूदनस्य विमला मूर्त्तिर्जगत्पालिनी
नाविष्णुः पृथिवीपति· श्रुतिरिति प्रत्यायिका तत्र मे ।
ऐश्वर्य्यं जगदीश्वरस्य सुमहद् यत् स्वीकृता मोहिनी
मूर्त्तिस्तेन पुरापि कार्य्यवशतो लक्ष्मीमहाराज्ञि हे ॥६४॥

श्रमरहिता सुमनोर्म्महिता सहिता प्रबलेवलयेन ।
वसुधा कल्पनतेयं विभवति लक्ष्मीमहाराज्ञि ॥६५॥

गूढे वस्तुनि नीतितत्त्वपरया सम्मन्त्र्य सार्द्धं त्वया
जानूजीनृपति पति शुभमति सप्ताङ्गचिन्ता व्यधात् ।
लक्ष्मीदेवि विवेकशालिनी ततोऽनायासतोऽनारतं
भूचक्रं परिपासि सम्प्रति सती मूर्त्तेव कीर्त्ति प्रभोः ॥६६॥

अस्मिन् काले कराले प्रसरति कलिनानुद्रुतो दूयमानो
भ्रामं भ्राम निकामं क्वचिदपि भुवने न स्थितिं प्राप धर्मः ।
जानूजीभूमिपालप्रणयिनि विनयाचारकारुण्यपुण्ये
श्रीलक्ष्मीदेवि पुण्ये त्वयि वसति पर साम्प्रत निर्व्विशङ्क. ॥

श्रद्धाभक्तिमणिप्रदीपवलिते धौते विवेकाम्बुभि·
[1]पूतैश्चेतः सद्मनि भावनोपहृतिभि. सम्पूज्य देव मुहुः ।
इष्ट सद्मनि सुप्रतिष्ठितमपि प्रव्यक्तमराधय-
त्येषा साधु गुरूदितेन विधिना सत्कीर्त्तिलक्ष्मीवती ॥६८॥

श्रीलक्ष्मीकान्तनामामृतनिभृतरसज्ञा रसज्ञा यदीया
श्रीलक्ष्मीकान्तकीर्त्तिश्रुतिभिरविरत यच्छ्रुति सुप्रतिष्ठा ।
श्रीलक्ष्मीदेवि ता त्वा कलयति सुजन सम्यगावासलक्ष्मी
मूर्त्ता विश्वासलक्ष्मी परिजननिकरो धर्म्मलक्ष्मी समस्तः ॥

श्रीलक्ष्मि स्फुरति भवत्कर समुद्रो
दानाम्भोलहरिधुतार्थितापमुद्रः ।
यज्जन्यो जगति यशोविधु सुधन्यो
धत्तेऽसौ प्रणयमतीव साधुचक्रे ॥७०॥

---

१. 'पूते चेतसि भावनो°' एव पठितु शक्यते ।

उद्यद्दानाम्बुवृष्टिप्रशमितजगदुद्दामदारिद्र्यदाव-
पोद्गच्छद्धूमधारामलिनितगगनव्यञ्जिताश्चर्यशक्तेः ।
लक्ष्मीदेव्या रघूजीनृपसुतमहिषीमौलिरत्नायिताया·
कैलासोदारभासो दिशि दिशि मुयश शीतभासो वलन्ते ॥७१॥

जानूजीभूमिपालो दिवमवति हरौ गोत्रभेदिन्यरक्तै-
र्देवैरभ्यर्थ्य नीत. कृतसुकृततया सम्मत सविभागी ।
अर्द्धं भार्याधिमङ्ग पतिरिति निगमोक्तेन तस्यैव मूर्त्तिः
प्रोदञ्चत्कीर्त्तिलक्ष्मीरवति भुवमसौ तत्प्रिया पुण्यमूर्त्तिः ॥

पञ्चद्राविडपञ्चगौडविदुषा वर्ग प्रतिष्ठापित. .
सर्वत्रानवकाशदुस्थितमना धर्म्मो व्यवस्थापित ।
दानैरेतदनक्षर दिशि दिशि स्व नाम विश्रावित
कि कि कि न कृत त्वयाऽत्र सुकृतं लक्ष्मीमहाराज्ञि हे ॥७३॥

महाराज्ञ्या लक्ष्म्याः कृतसुकृतलक्ष्म्या· प्रतिदिनं
गुणाना साम्राज्य कियदरुणि[?] कुर्म्मो हृदि वयम् ।
दरिद्रा· स्वर्णाद्रिं कथमपि समासाद्य कनकं
शतच्छिद्रे चीरे कियदह नह्यन्तु निजके ॥७४॥

श्रीलक्ष्मि प्रगुणैस्तवातिनिपुणैरापूर्यमाणा गुणै-
राकाशात्मतया तथोभयतया नापि श्रुतिस्तृप्यति ।
एतन्निर्वचनोद्यताऽपि रसना त्वेकाकिभावा जन-
स्वाभाव्यात्स्वयमेव निर्व्वचनतामालम्बते तत्क्षणात् ॥७५॥

सौभाग्यं नागपुर्य्यास्त्वदमलचरणन्याससम्पत्सपद्म-
सम्पन्नाया वदाम किमिह तरलिताः स्वल्पदृष्टश्रुताश्च ।
श्रीलक्ष्मीदेवि तत्तन्नयविनयनिधेर्यत्र साक्षान्निवासो
लक्ष्मीदेव्यास्तदीयस्तुतिपरवचनन्यास एवोपहासः ॥७६॥

लक्ष्मीदेवि दृशा सितासितरुचा कारुण्यपूरस्पृशा
ये नाम स्नपिता जनाः सुमनसो भास्वत्तप.सङ्गतौ ।
गेहद्वारमलङ्करोति वितता तेषां विशेषादसा-
वुत्तानद्विपकर्णतालतरला रोलम्बमाला ध्वनैः ॥७७॥

लक्ष्मीदेवि सुवर्णपाणिकमले···सुवर्णं बहु
त्वद्धस्तेन सुवर्णनीयमभितः सूते सुवर्णद्रुमम् ।
यस्य प्रेक्ष्य सुवर्णमेति रजतं कुर्वन्तु ता दुर्यशो
यस्यायं भगणः सुवर्णघटितस्यादौ मलःसञ्चयः[?] ॥७८॥

लक्ष्मि त्वं करलीलयेव विदुषां दारिद्र्यदन्तिच्छिदां
धत्से कीर्त्तिरपि च्छिनत्ति जगतां यद्ध्वान्तदन्तावलम् ।
तन्मन्ये सबलाबलान्वितबलेऽत्वर्थेऽभिधेये बला-
नामेद च्युतवर्णदत्तकलया विद्योविधाता व्यधात्[?] ॥७९॥

शश्वद्दानकरो गुणार्ज्जनकरो विश्वस्य रक्षाकरो
विद्वन्मानकरोऽयमद्भुतकरो लक्ष्मीकरो दृश्यते ।
यत्र श्रीरनुरागिणी स्थिरपदा पद्मानुकारेक्षणे
युद्धव्याकृतिना च येन कलिता लेखाः शुभाशंसनाः ॥८०॥

अमन्दरागयोगस्ते कोऽयं रत्नाकरः करः ।
कृतार्थयति यो रत्नैः श्रीलक्ष्मि विबुधव्रजान् ॥८१॥

द्युमणिः करैर्दशाशा एव सहस्रेण पूरयति ।
लक्ष्मि तवैकस्तु कर परिपूरयते सहस्राशा ॥८२॥
द्युमणिरिह्व दशाशामात्रपूर्तौ समर्थो
भवति करसहस्रेणैव लक्ष्मीसुराज्ञी ।
धरणिमणिरियं तु श्रीमती दक्षिणेन
प्रभवति हि सहस्राशाप्रपूर्त्यै करेण ॥८३॥
जगदवनविधौ समाहिताया
···विभजनेन जनेषु सस्यताया ।
न हि विततगिरा महाकवीनां
गुणवति लक्ष्मि भवद्‌गुणा मृषोद्या ॥८४॥
उत्साहप्रभुमन्त्रशक्तिवलिता सर्वैर्गुणैर्भासिता
ताभिः सिद्धिभिरन्विता समुदयैः सर्व्वैश्च सम्भाविता ।
तैस्तै राजभिरादरेण महता सम्मानिता राजते
नीतिर्मूर्त्तिमतीव शुद्धहृदया लक्ष्मीमहाराज्ञ्यसौ ॥८५॥
यत्र ब्रह्मप्रतिष्ठा व्यरचि गुणविदा यत्र लक्ष्म्या निवासो
विष्णोर्यत्र प्रसाद. प्रसरति सुधृतेर्यत्र मित्रानुरागः ।
श्रीलक्ष्मीः साऽपि राज्ञी भवति वसुमतीमण्डलिन्यश्च राज्ञः
तत् पद्मं पुष्पमन्यान्यपि बत कुसुमान्येवमज्ञस्य बुद्धिः ॥८६॥
लक्ष्मीदेवि सुमङ्गलान्वितजया पूर्णा···त्वं सदा-
नन्दा किञ्च कवौ विचारविमले भद्रा सिद्धिदा ।
जानूजीजगतीपतेः प्रियतमे भानूपमानस्य हे
रिक्ता नासि कदाचनापि सुगुणै सर्व्वातिरिक्ता ततः ॥८७॥

[1]श्रीगोविन्दपदारविन्दविलसच्चित्तारविन्दा[2] सदा
सानन्दा शरदिन्दुसुन्दरयशोवृन्दा सतामर्थदा ।
लक्ष्मीरेव विवेक्तुमर्हति परं दोष गुण वाऽमला
नीरक्षीरपरीक्षणे चतुरतामालम्बते हंसिका ॥८८॥

मर्य्यादाश्रयिण प्रसादमवतो गम्भीरताशालिनो
जानूजीगुणसागरस्य दयिता गङ्गेव लक्ष्मीरियम् ।
यस्या सत्करिदानवारिवलिता सत्कीर्तिधारा मुद
धत्ते भानुभुवाऽनुयातपदवीव प्रोल्लसद्विभ्रमा ॥८९॥

लक्ष्मीदेवि वसुन्धरामयमहापीठस्थयुष्मद्यश -
श्रोयागेशमहाभिषेकविधये धात्रा ध्रुवं सम्भृत. ।
[3]तत्तद्राहुरदाभिघातविवरस्वच्छन्दनिर्य्यत्सुधा–
धारप्राप्तसहस्रधारकलसश्रीक. सुधादीधिति ॥९०॥

लक्ष्मीदेवि किमालपामि भवती लक्ष्मीविलासोदयं
त्वन्नासीरचरीषु सम्पदतुला दासीष्वपि प्रेक्ष्यते ।
यासामाभरणप्रभासमुदयैराशासु शक्रायुध–
श्रेणीसङ्घटना विना जलधरारम्भ समुज्जृम्भते ॥९१॥

त्वत्कीर्त्तिः स्फीतमूर्त्तिर्व्वितरणपयसा कर्दमिन्यामवन्यां
भ्रान्त्वा पीयूषकुण्डे रजनि[कर]करे क्षालयामास पादौ ।
लक्ष्मीदेवि प्रयाता तदनु दनुसुतारातिरामासमाज
प्रायश्चन्द्र. कलङ्की तदवधि समभूत् क्वामृतांशु कुरङ्ग ॥

---

१. क. '°नारायण°' इत्यत्यधिकमत्र लिखितम् । २. '°चेतोमिलिन्दा' इत्यपि पाठः । ३. 'स्वर्भानुस्फुटदन्तघात°' इति पत्रप्रान्ते पाठान्तर दत्तम् ।

युष्मत्कीर्त्तिर्द्विजेशः सकलवसुमतीमण्डलभ्रान्तियोगा-
दङ्ग बङ्ग कलिङ्ग मगधमपि गत किञ्च सौराष्ट्रमेषः ।
प्रायश्चित्तं वितन्विन्निव जलधिजलस्नात उत्थाय नित्य
श्रीलक्ष्मीदेवि कुर्वन् हरिपदभजन शम्भुतोषञ्च भाति ॥६३॥

लक्ष्मि त्वद्यशसः सुधाकरसरित्कासारशैलाटवी-
पारावारतटीषु नित्यमटतो रक्षार्थमेकाकिनः ।
मन्ये लक्षणधूपधूमकलित ताराक्षताभ्यर्च्चित
रौप्य धारणयन्त्रमर्पितमिद चन्द्रच्छलाद्वेधसा ॥६४॥

लक्ष्मीदेवि महीमहीधरनभोनाकक्रमादुच्चधी-
स्त्वत्कीर्त्तित्रिपथा प्रदानविनयप्रज्ञानजन्माञ्चति ।
एषा व्युत्क्रमतोऽञ्चति त्रिपथगा साम्ये प्रसादादिनाऽ-
प्युच्चानुच्चपदाभिलाषुकतया भेदो महानेतयोः ॥६५॥

विधत्ते सर्व्वाशाभरणमुपधत्ते सुमनसां
समानत्व भूमीवलयमखिल भूषयति च ।
वदान्या सम्मान्या सकलजगतामुन्नतिमती
परं लक्ष्मीदेवि त्वमिव तव कीर्त्तिर्गुणवती ॥६६॥

लेखेव प्रतिपद्विधोः प्रतिपदं वन्द्या जनैरादरा-
त्सद्वर्धिष्णुरनुक्रमात्सुविमला त्वत्कीर्त्तिराज्ञा च ते ।
त्वन्नाम्नि त्वयि या सुवर्णमयता···चेक्ष्यते
लक्ष्मीदेवि तवा वयश्च विलसद् भानो वृतार्थी जनः[?] ॥

श्रीसाम्बोऽपि त्वदाज्ञामनुसरति भवत्सम्प्रसादप्रभाव-
प्राप्तैश्वर्य्यः स्वयम्भूरपि भवति भवत्पालनाद् वित्तभूमिः ।
मुक्तैः सार्थीकृतार्थाः सपदि सुमनसां वस्तुतस्त्वां स्तुवन्ति
श्रीलक्ष्मीदेवि सन्ति त्रिभुवनभवने त्वद्यशांस्युल्लसन्ति ॥
तन्वन् पक्षप्रसादं स्वरुचिमनुचरन्नुद्गिरंश्चर्क्ष मुक्ता-
धूतध्वान्ताम्बुनीलीनिचयकणनिभं लक्ष्म बिभ्रन्निजाङ्के ।
आशाकासारशोभां विदधदतितमां चन्द्ररूपेण मन्ये
श्रीलक्ष्मीदेवि राजत्यतिधवलतनुस्त्वद्यशोराजहंस ॥९९॥
लक्ष्मीदेवि महीतले कति कति क्ष्मापालनं क्ष्माभुजां
कुर्वत्यः सुदृशो न सन्ति ददते ताः किन्न किं भान्ति न ।
ता. साधारणतारकाः शशिकला त्वं जानराजप्रिये
ता' सामान्यलता भवन्ति नियतं त्वं कल्पवल्ली मता ॥१००॥
कृष्णं भावयताऽपि तावकहृदा शुक्लत्वमालब्यते
शुक्लेनापि गुणेन ते त्रिभुवने रक्तत्वमारभ्यते ।
रक्तेनापि करेण सम्प्रति हरित्सार. समाकृष्यते
लक्ष्मि त्व चतुरा नयेन चतुरो वर्णान् बिभर्षि ध्रुवम् ॥१०१॥
आनीलश्वेतपीतारुणहरितकुथाः सारशृङ्गारधारा-
धारा धाराधराभाश्चलधरणिधरभ्रान्तिमुत्पादयन्त ।
श्रीलक्ष्मीदेवि चञ्चत्करवलितपयःसीकरैर्व्योम्नि तारा-
स्ताराः सन्दर्शयन्तः किमपि विदधते शोभितां त्वद्द्विपेन्द्राः[1]॥

---

१. तुल० जा० रा० च० ५१.

सोत्साहा वासुदेवोद्वहविहगहसस्फीतफेनप्रवाहा
वाहास्ते गन्धवाहाधिकसुभगरया बिभ्रतो दर्प्पलक्ष्मीम् ।
लक्ष्मीदेवि त्वदीयाः पटुचटुलसटाकोटिनद्धाच्छमुक्ता
मुक्ता दोषैरनेकाकृतिजनपदजा मन्दुराया स्फुरन्ति[१] ॥१०३॥
श्रीमद्वाहेषु धावत्स्वधिमहि भजते पङ्गुभाव नभस्वान्
दुर्वाचं स्वान्महस्वान् प्रवदति कुपितः शश्वदश्वान् विवस्वान् ।
उच्चैरञ्चन्तमुच्चैश्रवसमपि सुराधीश्वरो धिक्करोति
श्रीलक्ष्मि व्रीडभावादिव न खगपतिश्चञ्चुमुच्चै करोति[२] ॥
श्रीलक्ष्मि त्वत्प्रयाणे प्रखरहयखुराघातसञ्जातबाधा
भेरीभाङ्कारभारक्षुभितनिजजलैरम्बुधिः सिञ्चति क्ष्माम् ।
दिङ्माला वैजयन्तीवसनविवरणैर्व्वीजयन्तीव धूली-
धारा धावत्युदारा दिवमिव किमपि प्रष्टुकामाऽश्विनेयौ ॥
विद्वद्ब्राह्मणसैन्यबन्धुसुहृद. सम्प्रीणयन्त्या भृशं
प्रीत्या प्रत्यहमागतै. प्रतिदिश सम्पूर्यमाणा गुणैः[३] ।
पूर्णाः सन्ति मनोरथा इव तव श्रीलक्ष्मि ताः सम्पदः
सिन्धोराप इवाम्बुदाम्बुव[ध]रदिग्दन्तावलान् पुष्णत. ॥
सत्कारेण यथोचितं गुणपुरस्कारेण सम्भाविताः
प्रज्ञाविक्रमभक्तिभिः समुदिता भृत्यास्त्वदाज्ञाकराः ।
लक्ष्मीदेवि सुसाधयन्ति यदमी कार्य्यं प्रभाव· स ते·
भानोरेव निदेशतोऽयमरुणो दिक्सम्प्रकाशक्षमः ॥१०७॥

---

१. तुल० जा० रा० च० ५०. २. तुल० जा० रा० च० २०७. ३. 'करै·' इत्यपि पाठः ।

लक्ष्मीदेवि प्रजानुपालनबृहन्मूलः प्रदानाम्भसा
ससिक्तः प्रतिवासर नयदयाशीलादिशाखावृत. ।
स त्वद्धर्मतरुर्गुर्विवितनुते कीर्त्तिप्रसूनोज्ज्वलो
यच्छायाश्रयसुस्थिता कलितपोत्तापं न चाप्नोति भू. ॥१०८॥

जानूजीकीर्त्तिदुग्धोदधिपरिमिथिता त्वद्यशोराजिगङ्गा
श्रीलक्ष्मीदेवि शङ्खे निहितमिव पयस्तुल्यरूपा चकास्ति ।
तीर्थेऽस्मिन्नत्यपूर्णे सकलवसुमतीमण्डलव्यापके ये
सन्त. सुस्नान्ति तेषामुदयति नियतं पुण्यनैपुण्यलक्ष्मीः ॥

त्वत्कीर्त्तौ सन्निमग्न परिमृशति करी शुण्डया दन्तदण्ड
साशङ्क कण्ठनालं वलयति चमरी चामरं द्रष्टुकामा ।
आत्मान प्रत्यभिज्ञापयितुमिव मिथो हंसयुग्म विकूज-
त्यन्यत्किम्वा वदामो रघुनृपतनयप्रेयसि श्रीललक्ष्मि ॥

स्निग्धच्छायधरः स्फुरत्तरभुजाशाखाभरः पल्लवा-
कारोदारकर· स्मितञ्चितसुमो लोलालकालिः फलम् ।
दद्यात्तेऽभिमतं सुभक्तिरसवञ्चित्तालवालस्थितो
लक्ष्मीदेवि रमालतावलयित. श्रीविष्णुकल्पद्रुमः ॥१११॥

श्रीलक्ष्मीदेवि लक्ष्मीर्व्वसतु तव गृहे सर्व्वदा सर्व्वमान्या
धन्यं धर्म्यं यशस्यं विरचय वसुधापालनं त्वं वदान्या ।
चञ्चच्चञ्चूनुदञ्चच्चिरमिह सुयशश्चन्द्रिकाचाकचिक्यं
प्रोदञ्चच्चारुशीले चतुरुदधिचरांश्चारयोच्चैश्चकोरान् ॥

वमात्रेयोऽन्यदेशं सपदि वशयितुं प्रेषितो ज्ञानभूभी-
भर्त्रा भ्राता शुभार्याऽपि च किल निदधे सम्पदां रक्षणार्थम् ।
अप्यस्मिन्नाकलोकं गतवति तदभिप्रायमुन्नीय लक्ष्मी-
देव्या साम्राज्यलक्ष्मीनिधिरधिवसुधं साम्बराजो व्यधायि ॥
सैन्ये गन्तुमशक्नुवन् कृतकृपादृष्टेर्निदेशादिह
श्रीलक्ष्म्या निवसंस्तदीयनगरे श्रीकृष्णदत्तः कवि. ।
निर्म्माति स्म मनोरमा गुणमणीमालामिमामादरा-
न्माघे मासि सितेसिते प्रतिपदि श्रीरामसेवापर ॥११४॥

श्रीलक्ष्मीगुणमणयो मनोज्ञरूपाः
संदृब्धा नवकविना सुवृत्तपद्यै. ।
चेदत्र ग्रथनकृतो भवेद् विशेषो
धीमद्भिः स खलु समाहितो विधेयः ॥११५॥

इति लक्ष्मीगुणमणिमाला ।

लक्ष्मीदेवि दयानिधे गतवयास्त्वत्सेवया केवलं
नाद्यापि व्युपशाम्यति व्यतिकरो दुर्दैवजन्मा मम ।
कस्यान्यस्य भजामि हन्त शरणं स्यात्कस्य वाऽन्यस्य वा
स्वीकर्तुं भवदीयमत्र विभुता सर्व्वे त्वदाज्ञाकराः ॥१॥
कारुण्यामृतदृष्टिसृष्टिपटुना त्वं दृष्टिकोणेन हे
लक्ष्मीदेवि मनागपि स्नपय मां भक्त्या त्वदेकाश्रितम् ।
सद्यो दुर्व्विधिदुर्लिपिव्यतिकराः सम्प्रोञ्छिताः सन्तु मे
वन्धूनान्तु मदङ्गसङ्गवशतस्तापश्चिराच्छाम्यतु ॥२॥

लक्ष्मीदेव्यसि भक्तवत्सलतया ख्याता जगन्मण्डले
ख्याता दीनदयालुता च तव सा नित्यावदातात्मन. ।
चेन्मां भक्तजनेषु वेत्सि यदि वा दीनेषु चान्तर्गन्तं
तेभ्यो नास्मि परस्तत समुचिता कारुण्यदृष्टिर्म्मयि ।।३।।

त्वदीयत्वेनाहं जगति विदितोऽस्मीति कृपया
स्वहस्तेनैव त्वं विरचय विदायं मम ततः ।
अये लक्ष्मीदेवि प्रथितविनये चातकशिशो-
र्मन.प्रीत्यै धाराधरसलिलधारा हि भवति ।।४।।

---

## पद्यानुक्रमणी

---